इति शिवाराधनप्रशंसनं, यूयं सर्वेऽपि शिवमाराधयत - इत्युक्त्वा शिवोत्कर्षवर्णनप्रसङ्गात् –

"यावत्पुण्यं कृतयुगे शिवस्याभ्यर्चनात् भवेत् ।
ततः शतगुणं पुण्यं त्रेतायां शिवपूजनात् ।
त्रेतायां पूजनाच्छम्भोः यावत्पुण्यमवाप्यते ।
ततोऽयुतगुणं पुण्यं द्वापरे शिवपूजनात् ।
द्वापरे शिवपूजातो यावत्पुण्यमवाप्यते ।
ततः कोटिगुणं पुण्यं कलौ शङ्करपूजया ॥

किन्तु-"श्रीरुद्रालङ्कृतान् वेदान् अनधीत्यैव दुर्जनाः ।
अन्याभ्यासपरा नित्यं भविष्यन्ति कलौ युगे ।
शिवमायामोहितानां अभाग्यानां दुरात्मनाम् ।
शिवार्चने कलौ प्रीतिः न कदापि भविष्यति,"। इति शिवार्चनप्राप्यपुण्यफलवर्णनप्रसङ्गात् जम्बूद्वीपे शिवार्चनजपुण्यस्य सर्वोत्तमत्ववर्णनं –

किञ्च "जम्बूद्वीपे शिवक्षेत्रे कुम्भघोणाभिधं महत् ।
तस्मिन् क्षेत्रे जन्ममात्रत् जन्म न प्राप्यते पुनः ॥

तत्र शङ्करमभ्यर्च्य यावत्पुण्यमवाप्यते ।
ततः शतगुणं पुण्यं शिवार्चायां चिदम्बरे ॥

चिदम्बरे शिवार्चातः यावत्पुण्यमवाप्यते ।
ततः शतगुणं पुण्यं श्रीमद्वृद्धाचलेश्वरे ॥

वृद्धाचले शिवार्चातो यावत्पुण्यमवाप्यते ।
ततः शतगुणं पुण्यं शिार्चातोऽनलेश्वरे ॥
ततोऽप्यत्युत्तममं क्षेत्रं काञ्चीक्षेत्रं शिवात्मकम् ॥

ततोऽयुतगुणं पुण्यं तत्र शङ्करपूजया ।

ततो दक्षिण कैलासः शिवप्रियकरो वरः'' इत्येवंरीत्या शिवप्रियतमक्षेत्रवर्णनं च क्रियते ।:

षोडशेऽध्याये -

वैकुण्ठे देवानां श्रीहरिदर्शनम् - तन्मुखात् शिवाराधनस्य वैशिष्ट्यवर्णनं, महादेव महादेवेति वदतः विप्रस्य कृपया कस्यचिद् पुरुषस्य पिशाचभावात् मुक्तिः, महेश्वरं सर्वदेवतातुल्यं भावितवतः पुरुषस्य नरकयातनाभावः - महादेवं सर्वदेवतातुल्यतया भावयित्वा तं प्रति पुष्पास्त्रं क्षिप्तवतः तेन भस्मीभूतस्य मन्मथस्य नरकयातनानुभवश्च वर्ण्यते ॥ अत्रैव - मेधावीति कृतनामधेयस्य अल्पायुषः कस्यापि कुमारस्य स्वमातरं प्रति शिववैभवकथनं -

"किमर्थं क्रियते दुःखं मातर्दुःखं परित्यज ।
यदि गच्छेच्छरीरं मे मम हानिर्न सर्वथा ॥

नित्योऽहं अजरः अनन्तः मम नाशः कथं भवेत् ।
शरीरनाशो विज्ञातः दैवादद्य मयाऽधुना ॥

अनोऽहं पूजयिष्यामि भक्तिपूर्वं महेश्वरम्" ।

इति मातरमुक्त्वा तेन शिव शङ्करेति नामस्मरणं ततश्च, हे मातः शरीररक्षणोपायः तिष्ठत्येको महान् मम ॥

मृत्युञ्जयमनुं मह्यं अञ्जसोपदिश" इत्युक्त्वा मातुः मृत्युञ्जय मन्त्रं स्वीकृत्य शिवमूर्तिस्पर्शनध पूर्वकं मृत्युञ्जय-(त्र्यम्बक) मन्त्रावर्तन, ततश्च यथाकालं कालस्यागमनं, तं दृष्ट्वापि अनुत्कण्ठितमनसा तेन कृताञ्जलिबन्धेन

"ओं नमः शम्भवे नित्यं मृत्युञ्जय नमोऽस्तु ते
निवारय महामृत्युं मृत्युञ्जय नमोऽस्तु ते" इत्यादिभिः शिवस्तुतिकरणं, आन्तकस्य तत्समीपगमनाशक्तिः, तद्-दृष्ट्वा चित्रगुप्तेन -

"महामृत्युहरं मन्त्रं जपत्ययमिहार्भकः" इति निवेदनं, ततश्च पराजितस्य - कालस्य - स्वधामगमनं - कुमारस्य अल्पायुषः कल्पान्तावधिकदीर्घायुःप्राप्तिः इत्यादिकं वर्ण्यते ॥

**सप्तदशेऽध्याये –**

ईश्वरेण पूजोपकरणविवरणप्रसङ्गात् - शिवपूजाधिकारयोग्यतां वर्णयोनिभेदमन्तरा सर्ववर्णाश्रमिणां यक्षगन्धर्वविद्याधरादीनामप्यस्ति, प्रातःकालीनशौचादिकृत्यमारभ्य स्नान - जलतर्पण - वस्त्रचीरादि-धारण - भस्म त्रिपुण्ड्रधारणक्रम - रुद्राक्षधारण - सन्ध्यानुष्ठान - पूजोपकरणपात्रसाधन - मूलमन्त्रोच्चारणपूर्वकं सर्वशैवमन्त्रोच्चारणसहितत्वेन पूजाङ्गतया अर्घ्य-दान - अभिषेकविधान - प्रत्येकोपचारार्थकश्लोकमन्त्रादिकथनं, कालत्रयेऽपि शिवाराधनस्य कर्तव्यत्वकथनं, एवं कुर्वतः भक्तस्य सर्वोत्तमपददानकथनं तत्प्रसङ्गतः अशैवविप्रदर्शनकुपितशैवेन अशैवपूजाकरणजन्यपापप्रक्षालनाय प्रायश्चित्तविधानं, बिल्ववृक्षतलाश्रितं शैवपुङ्गवं उपेत्य केनचिद् द्विजेन स्वात्मवृत्तान्तकथनपूवकं स्वस्वप्नवृत्तकथनं, शैवेन तत्प्रायश्चित्तरीत्या यमभयनिवारकशिवपूजाविधानाय उपदेशः, तदनुसारं तस्य च पूजाकाले तत्प्राणवियोगावसरे मुक्तिलाभः, तत्प्राणहरणायागतयमभटानां यमसन्निधौ तद्वृत्तान्तकथनं, यमेन भटेभ्यः शिवतत्वनिर्वचनं अशैवजनानां नरकेषु निपातनाय आज्ञाकरणम्

किञ्च "महापातकिनोऽप्यन्ते विधाय शिवपूजनम् ।
प्राणांस्त्यजन्ति चेत्तेषां यातना न भविष्यति ॥

मा गच्छत भ्रमेणापि यूयं शैवगृहान् प्रति ।
भवद्रूपं समालोक्य तेषां पीडा भविष्यति ॥

भवत्कृतं यदि भवेत् तेषां दुःखं तदा मया ।
त्याज्या भवन्तः सर्वेऽपि शिक्षणीयाश्च यत्नतः ।" इति कथनं, ततश्च तेनैव, हिमाचले शिवभक्तदर्शनाय ब्रह्मादिदैवतगणगमनं, तदा तेन शैवेन

"भस्मभासितफालाय रुद्राक्षाभरणाय ते ।
पञ्चार्णजपसक्ताय नमः शैवाय विष्णवे" ॥ इति शिवपूजापरविष्णुप्रशंसनं, ततः चित्रगुप्तेन - प्राक्कालिकवृत्तान्तकथनप्रबङ्गात् एकदा शिवः स्वगणमध्ये भो गणाः श्रृणुत, महापापी कश्चित् विप्रः आसीत्, स च मद्यमांसपरः सन् कामपि सुन्दरीं वीक्ष्य ताय सह रन्त्वा पुत्रीद्वयं लेभे' पुनश्च सः कामातुरः प्राप्तयौवने निजकन्ये च रेमे लेभे च दुराचारान् सुतान् । पुनश्च द्वौ ब्राह्मणौ हत्व आहरास्त्रं संहरेमौ, प्रहर प्रहर इति वदन् केनापि हतः ॥' तद्दृष्ट्वा सर्वेश्वरः प्रसङ्गात् एतदुक्तवचनमध्ये प्रविष्टं 'हर' इति वर्णद्वयमपि तत्कृतमहापातकानि सर्वाण्यपि अपाचकार । अतः अयं मोक्षयोग्यो जातः इति

देवता सार्वभौमोऽहं मदेकशरणात्मनाम् ।

मोक्षं दास्यामि [1]सुभगे सत्यं सत्यं न संशयः ।।

इति अवदत् इति च वर्णनं दृश्यते ।।

**अष्टादशाध्याये –**

शिवो देवीं प्रति प्राक्कालिकीं प्रवृत्तिं कथयति । देवि, पुरा बृहस्पतिः इन्द्रं अवदत्, कश्चित्, मया सन्दृष्टेषु बहुषु शैवेषु, बिल्वदलैः ईशं अर्चयन्नास्त । तदा कश्चित् द्विजः समागत्य तमपृच्छत् सत्सु शिवान्यदैवतेषु कुतस्ते शिवे अनीदृशीयं श्रद्धा - भक्तिः इति ।। पूजां समाप्य स च द्विजः शिवदूषकं जघान ।। यमभटाश्च तं वैवस्वत-पुरं निन्युः ।। इति वर्णनम् ।।

**एकोनविंशेऽध्याये –**

इन्द्र, अद्य आवाभ्यां अवश्यं अचिरात् यमसदनं द्रष्टव्यमिति बृहस्पतिवचनम् । उभाभ्यां यमनगरीगमनं, यमेन उभयोः स्वागतवचनक्रियोपचारः तदा शिवानुत्कर्ष-

---

1. सुभगे इति देवीं प्रति संबोधनम् ।।

बादिन तद्विप्रेण हृतस्य तत्र आनयनं, चित्रगुप्तेन तत्कृत-पापवर्णनं, तत्फलत्वेन - शूलशतघ्नीमुख्यायुधैः यमेन तद्धननं, इन्द्रेण यमं प्रति, किमेतावानेव दण्डः उत अन्यदपि शासनान्तरं विद्यते इति कृतस्य प्रश्नस्य यमस्य प्रत्युत्तरमेवम् -

आब्रह्मकल्पमेतस्य क्रूरं भाव्यं च शासनम् ।
शिवापचारवादी यः स सुरोऽस्तु नरोऽस्तु वा ॥

सर्वदेवोत्तमं शम्भुं योऽन्यथा वक्तुमिच्छति ।
तस्यापि नरकावासो दुःसहः सम्भविष्यति ।
देवेन्द्रोऽस्त्वस्तु वा चन्द्रः यद्वोपेन्द्रोऽस्तु किं मम ॥

शासनीयाः इति "शङ्करेण आज्ञा कृता इति निवेदनं, ततश्च यमेन तत्र यातनामनुभवतः बहूनपि प्रत्येकं निर्दिश्य तत्तत्कृतशिवापराधकथनं भस्मोपरि फाले चन्दनलेपन-स्यानौचित्यकथनं, प्रसङ्गात् यमेन कारकोटरेण सह शिवापचारहेतोः पिशाचभावं गतस्य संभाषणकथनं तत्प्रसङ्गात्, तन्निर्मित - गोमयलिङ्गे प्रक्षिप्तपादस्य स्वपितुः चरणच्छेदनं ततश्च शान्तचित्तेन तेन शिवपूजाकरणं तदा प्रत्यक्षतां गतेन शिवेन तस्मै मोक्षफलप्रद - अव्यभिचार-भक्तिभाव, काशीक्षेत्र एव तनुत्याग - पञ्चाक्षरोपदेशादि-वरदानादिकथनं ततश्च राजकारकोटरसंवादप्रसङ्गत.

शिवाराधनस्य मोक्षफलप्रदत्वकथनं, एवं यमेन इन्द्रगुरू प्रति रावणकृतकुबेरसम्पद्हरणेन दरिद्रभावं गतस्य हिमवत्समीपं गतस्य कुबेरस्य रात्रौ शिवानर्चनजन्यपापफलत्वेन आत्मनः निर्धनत्वकथनं, ततश्च हिमवता कुबेराय षोडशाङ्गुलोन्नतं पार्थिवं लिङ्गं विधाय शैवसाक्षिकतया सार्धसंवत्सरपर्यन्तं विधिवच्छिबपूजाकरणेन पञ्चलक्षवारपञ्चाक्षरजपेन हवनेन जाबालोक्तक्रमेण वृषभान्वितशिवलिङ्गदानेन च नष्टा निधयः पुनः प्राप्या भवेयुः इति उपदेशः कृतः इति कथनं ततश्च यमेन इन्द्रगुरुभ्यां कशाभिरभिताड्यमानं, ध्मायमानाग्निकुण्डे दन्दह्यमानं सन्तप्तायसशृङ्खलाबद्धं तप्तायसपिण्डैः ताड्यमानं त्रिशूलाग्रपोथ्यमानं मन्मथं अतिसन्तप्ततैलेन सिच्यनानं सन्दर्श्य अयं विष्णुप्रियोऽपि शिवद्रोहफलान्येवं भुङ्क्ते इति कथनं, ततश्च मन्मथोद्धाराय पुत्रवात्सल्यप्रेरितया लक्ष्म्या विष्णुं प्रति कृता प्रार्थना "शिवद्रोहफलं भुज्यतेऽनेन, यद्यहं तन्मोचनाय, प्रयतेय तर्हि तत्साहाय्यकर्तुः ममापि शिवापराधः प्रसज्येत, यातनाभोगोऽपि भवेदिति विष्णुदत्तप्रत्युत्तरवर्णनं, ततश्च सुभगोपाख्यान - कथनपूर्वकं दक्षिणकैलासवर्णनान्तं उपवर्ण्यंते ॥

इति शम् ॥

## ॥ अध्यायानुक्रमणिका ॥







# OUR NEW SANSKRIT PUBLICATIONS

| | | | Rs. |
|---|---|---|---|
| 1 | Bharatarnavam | | 100 |
| 2 | Gita Govindam | .... | 25 |
| 3 | Brahadeeswara Mahatmyam | | 43 |
| 4 | Kantimati Parinayam | | 36 |
| 5 | Mantra Sastra Sangraha | | 45 |
| 6 | Prapancha Sara Sara Sangıaha Part I | | 125 |
| | Part II will be released soon | | |
| 7 | Maruti Vijaya Champu | | 30 |
| 8 | Prayoga Ratnamala | .... | 55 |
| 9 | Paramahamsa Charya | | 60 |
| 10 | Rajamriganka (Ayurvedic Text) | .... | 45 |
| 11 | Risya Sringa Samhita - Part I | | 100 |
| 12 | „ - Part II | | 140 |
| 13 | Sarabharaja Vilasam | | 15 |
| 14 | Uddharakosam | .... | 23 |
| 15 | Yaska's Niruktam - Part I | .... | 85 |
| 16 | „ - Part II | | 100 |

२

॥ श्रीमहागणपतये नमः ॥

॥ श्रीसाम्बशिवाय नमः ॥

॥ श्रीगुरुभ्यो नमः ॥

# ॥ श्रीशिवरहस्यम् ॥

॥ उग्राख्ये सप्तमांशे ॥

( द्वितीयो भागः )



## ॥ त्रयोदशोऽध्यायः ॥

ऋषय ऊचुः -

सूत वेदार्थतत्वज्ञ काशीतत्वं यथार्थतः ।
यथाज्ञातं तथैवोक्तं त्वयाऽस्मभ्यं प्रयत्नतः ॥ 1

पवित्रिता वयं सर्वे त्वत्प्रसादान्मुनीश्वर ।
तत्वाववोधोऽद्य कृतस्त्वयास्मासु कृपानिधे ॥ 2

संसारानलसन्दग्धा वयं सर्वे त्वयाधुना ।
तर्पिताः सत्कथालापामृतवृष्ट्या च सेविताः ॥ 3

काशीकथामृतैः श्रेष्ठैर्दुष्प्रापाममृतादपि ।
तृप्तिं गता वयं सर्वे ह्यस्मद्भाग्यवशाद्ध्रुवम् ॥ 4

कृतकृत्या वयं सर्वे सम्भूतास्त्वदनुग्रहात् ।
अनुग्रहोऽयमस्माभिर्लब्धप्रायस्तपस्यथ ॥ 5

त्वया हितोपदेशोऽयमस्मभ्यं यः कृतोऽधुना ।
स दुर्लभकरो नूनमन्याप्राप्यो न संशयः ॥ 6

सूत काशीकथां श्रुत्वा दग्धाः पातककोटयः ।
सम्प्राप्ताः पुण्यनिचयाः सुलभं मोक्षसाधनम् ॥ 7

काशीकथासुधापानसमुत्कण्ठाऽभवत्पुरा ।
सफला सा समुत्कण्ठा जाताद्य त्वत्प्रसादतः ॥ 8

काशीकथासुधापानात्सन्तोषो यादृशोऽभवत् ।
सन्तोषस्तादृशोऽस्माकं सुधापानेऽपि नो भवेत् ॥ 9

काशीकथासुधापानं न कृतं येन सादरम् ।
स जीवन् मृत एवान्धः स नीचः पुल्कसादपि ॥ 10

यथा देवाः सुधां प्राप्य सुप्रीताश्च सुधाशनाः ।
काशीकथासुधां प्राप्य सुप्रीताःस्म तथा वयम् ॥ 11

विद्याः समग्राः सम्प्राप्य यथा प्रीता द्विजोत्तमाः ।
काशीकथासुधां .... .... .... ॥ 12

यथा नवनिधींल्लब्ध्वा सन्तुष्टोऽभूद्धनाधिपः ।
काशीकथासुधां .... .... ॥ 13

यथा शिवार्चनाल्लक्ष्मीं लब्ध्वा प्रीतो जनार्दनः ।

काशीकथासुधां .... .... ॥ 14

यथेशात्प्राप्य वैकुण्ठं सुप्रीतोऽभूज्जनार्दनः ।

काशीकथासुधां .... .... ॥ 15

यथा शिवार्चनाल्लब्ध्वा स्वर्गं प्रीतः शचीपतिः ।

काशीकथासुधां .... .... ॥ 16

यथा नवतृणं प्राप्य प्रीता गावः क्षुधातुराः ।

काशीकथासुधां .... .... ॥ 17

यथा प्रीतानि सस्यानि वृष्टिं प्राप्य यथाहितम् ।

काशीकथासुधां .... .... ॥ 18

यथा यथेष्टमन्नानि लब्ध्वा प्रीतः क्षुधातुरः ।

काशीकथासुधां .... .... ॥ 19

यथा कम्बलवस्त्राणि लब्ध्वा प्रीतो हिमातुरः ।

काशीकथासुधां .... .... ॥ 20

यथा यथेष्टं द्रविणं लब्ध्वा प्रीता धनैषिणः ।

काशीकथासुधां .... .... ॥ 21

यथा कामातुराः(न्) प्राप्य प्रीताः स्युर्नवयौवनाः ।

काशीकथासुधां .... .... ॥ 22

यथा पुत्रेषिणः पुत्रांल्लब्ध्वा प्रीताश्चिरायुषः ।
काशीकथासुधां .... .... ॥ 23

यथा पिता सुतान् दृष्ट्वा प्रीतो विद्यागुणोज्ज्वलान् ।
काशीकथासुधां .... .... ॥ 24

यथा विद्या द्विजं प्राप्य सुप्रीता शिष्टसम्मतम् ।
काशीकथासुधां .... .... ॥ 25

यथा सत्पात्रमालम्ब्य सुप्रीतो दानतत्परः ।
काशीकथासुधां .... .... ॥ 26

यथा चकोरः सुप्रीतो लब्ध्वा चन्द्रकलामृतम् ।
काशीकथासुधां .... .... ॥ 27

यथा शीतं जलं प्राप्य पान्थः प्रीतोऽर्कतापितः ।
काशीकथासुधां .... .... ॥ 28

प्रायः कृतानि पुण्यानि पूर्वमस्माभिरादरात् ।
कथं प्राप्यान्यथाऽस्माभिः सैषा काशीकथासुधा ॥ 29

काशीकथासुधादानं महद्दानमिदं मुने ।
नैतस्मादधिकं दानं सत्यं सत्यं न संशयः ॥ 30

अस्मासु दानपात्रेषु दत्ता काशीकथासुधा ।
वयं प्रमुदिताः सर्वे कृतकृत्यास्त्वया मुने ॥ 31

अतः परं मुनेऽस्मभ्यं काशीसम्प्राप्तिसाधनम् ।
वद कारुणिको यस्माद्भवानस्ति विचक्षणः ॥ 32

सूतः -

यूयं धन्यतमा विप्राः श्रौतधर्मपरायणाः ।
यतो युष्माकमुत्पन्ना प्रीतिः काशीकथामृते ॥ 33

काश्यां काशीकथायां च येषां श्रद्धाऽनपायिनी ।
ते(त) एव धन्याः पूतास्ते सत्यं सत्यं न संशयः ॥ 34

काश्यां शिवः स्वयं साक्षात्सच्चिदानन्दलक्षणः ।
तस्मिन्यस्य भवेद्भक्तिः स तु धन्यो महायशाः ॥ 35

यः काशीं द्वेष्टि मूढात्मा स शिवं द्वेष्टि वस्तुतः ।
ततः स निरयं याति सवंश्यो नात्र संशयः ॥ 36

शिवं विश्वाधिकं साम्बमनन्यसदृशं प्रभुम् ।
योऽन्यथा मनुते मोहात्स भवेत्पुल्कसाधमः ॥ 37

शिवद्वेषोऽपि विविधः स मयात्र निरूप्यते ।
श्रोतव्यं सावधानेन शुद्धनिश्चलचेतसा ॥ 38

विष्णवादिदेवतासाम्यं यो वदेदीश्वरे शिवे ।
स दुर्भगः शिवद्वेष्टा द्वेषस्तत्साम्यधीः शिवे ॥ 39

शिवेन देवदेवेन सदृशो नास्ति सर्वथा ।
तस्माद्विश्वाधिकत्वेन शिवः सर्वश्रुतिश्रुतः ॥ 40

यतः श्रुतौ शिवान्यस्य विष्णोराराधनं द्विजाः ।
विश्वाधिकत्वं नैवोक्तं स्तोत्रार्थमपि सर्वथा ॥ 41

अतो विश्वाधिको रुद्रः कथं विष्णुसमो भवेत् ।
रुद्रो विश्वाधिकः श्रेष्ठो देवोत्तम इति श्रुतेः ॥ 42

विप्रा विश्वाधिको रुद्रो यदि विष्णुसमस्तदा ।
श्रुतिर्विश्वाधिको रुद्रो ह्यन्येषां बाधिता भवेत् ॥ 43

विष्णोर्विश्वाधिकः सोमो जनितेति श्रुतिर्यतः ।
ततो विष्णुर्न सोमेन जनकेन समो ध्रुवम् ॥ 44

पवनादिभिरप्येनं न सोमः सोम उच्यते ।
सोमोऽयं पवनादीनां जनितेति श्रुतिर्यतः ॥ 45

शिवं विश्वाधिकत्वेन श्रुतिश्रुतमनामयम् ।
यो विष्णुसाम्यतां ब्रूयात्स देवेभ्यो बहिष्कृतः ॥ 46

विश्वाधिकः शिवो नेति यो वदेन्मोहतोऽपि वा ।
स नूनं कर्मचण्डालो निरयायैव कल्पते ॥ 47

विश्वाधिके महारुद्रे यो विष्णुसमतां वदेत् ।
स नूनं कर्मचण्डालो रौरवाय प्रकल्पते ॥ 48

विश्वाधिकं महारुद्रं योऽन्यथा वर्णयेद्भ्रमात् ।
स नूनं कर्मचण्डालः कुम्भीपाकाय कल्पते ॥ 49

चक्राङ्कग्रावसाम्येन शिवलिङ्गस्य पूजनम् ।
शिवद्वेषः सुतद्वेषः सर्वथा निरयप्रदः ॥ 50

शिवलिङ्गं शिवाकारं चक्राङ्कप्रस्तरैः सह ।
तं निवेश्य महापापैः संयुतो भवति ध्रुवम् ॥ 51

अत्युत्तमस्थानसंस्थं शिवलिङ्गं शिवात्मकम् ।
पूजनीयं प्रयत्नेन त्यक्त्वान्याराधनं द्विजाः ॥ 52

पतिव्रता यथा भक्त्या पतिमात्रपरायणा ।
तथा द्विजैः शिवो ध्येयः शिवः पूज्यो न संशयः ॥ 53

महेश्वरातिरिक्तं यो भ्रमेणाराधयेदपि ।
स चण्डाल इति ज्ञेयः सत्यं सत्यं न संशयः ॥ 54

विभूतिधारणं त्यक्त्वा यः शिवं पूजयिष्यते ।
स दुर्भगः शिवद्वेष्टा स द्वेषो नरकप्रदः ॥ 55

सर्वकर्मबहिर्भूतो भस्मधारणवर्जितः ।
भस्मना रहितं कर्म वृथा भवति सर्वथा ॥ 56

विभूतिधारणं त्यक्त्वा कुर्वन्हेमतुलामपि ।
तत्फलं न समाप्नोति पतितोऽपि भविष्यति ॥ 57

सन्ध्याशिवार्चनादीनि कर्माण्येतानि वस्तुतः ।
वैदिकानि ततस्तेषु कर्तव्यं भस्मधारणम् ॥ 58

यथोपवीतरहितैः सन्ध्या न क्रियते द्विजैः ॥
तथा सन्ध्या [पूजा] न कर्तव्या विभूतिरहितैरपि ॥ 59

गतोपवीतैः सन्ध्यायां कार्यः प्रतिनिधिः क्वचित् ।
विभूतिधारणेऽप्य(त्व)न्यो नास्ति प्रतिनिधिर्ध्रुवम् ॥ 60

विभूतिधारणाभावे सन्ध्यात्यागोऽपि वस्तुतः ।
द्विजो न प्रच्यवत्येव नाधिकारी यतस्तदा ॥ 61

विभूतिधारणाभावे यदि सन्ध्यां करोति सः ।
प्रत्यवैत्येव येनासौ नाधिकारी तदा द्विजः ॥ 62

यथाऽधीतांस्त्यजन् वेदान्प्रत्यवैति द्विजोत्तमः ।
प्रत्यवैति न सन्देहः सन्ध्याकृद्भस्मवर्जितः ॥ 63

सन्ध्यायां नाधिकारोऽस्ति मूर्छितानां यथा तथा ।
विभूतिरहितानां च सन्ध्यायां नाधिकारिता ॥ 64

सम्पादनीयं यत्नेन श्रौतभस्म सदा द्विजैः ।
स्मार्तं वा तदभावे तु लौकिकं वा समाहितैः ॥ 65

यादृशं तादृशं वास्तु पवित्रं भस्म सम्मतम् ।
धारणीयं प्रयत्नेन द्विजैः सन्ध्यादिकर्मसु ॥ 66

न संविशन्ति पापानि भस्मलिप्तं नरं सदा ।
कर्तव्यमतियत्नेन ब्राह्मणैर्भस्मधारणम् ॥ 67

यत्कृतं भस्मलिप्तेन श्रीमहादेवपूजनम् ।
तत्सर्वाभीष्टदं तस्मात्कर्तव्यं भस्मधारणम् ॥ 68

शिवस्यार्धनमस्कारः शिवद्वेष इति श्रुतः ।
स पुण्यनाशकस्तस्मात्तत्कर्ता पापकृद्भवेत् ॥ 69

साष्टाङ्गं दण्डवद्भूमौ प्रणामो भक्तिपूर्वकम् ।
निरन्तरं द्विजैः कार्यः शाम्भवेभ्यस्तथैव हि ॥ 70

शिवस्यार्धनमस्कारो महादोषावहो भुवि ।
स पुण्यनाशकस्तस्मात्तत्कर्ता पापकृद्भवेत् ॥ 71

साष्टाङ्गं दण्डवद्भूमौ प्रणामो भक्तिपूर्वकः ।
कर्तव्यः श्रीमहेशाय देवाधीशाय सर्वदा ॥ 72

महेश्वरजनद्वेषः शिवद्वेष इति श्रुतः ।
स पुण्यनाशकस्तस्मात्तत्कर्ता पापकृद्भवेत् ॥ 73

स द्वेषः पापफलदः पापकर्मप्रवर्धकः ।
शिवभक्ताः पूजनीया स्वशक्त्या साधुसम्मताः ॥ 74

हेमरौप्यान्नवस्त्राद्यैः प्रीणनीयाः प्रयत्नतः ।
शाम्भवान्मधुरालापैः प्रणामाद्यैश्च सन्ततम् ॥ 75

यः प्रणीयेत्स गौरीशं प्रीणयत्येव वस्तुतः ।
या कृता शाम्भवे पूजा सा शम्भोरेव वस्तुतः ॥ 76

साक्षादभ्यर्चितः शम्भुः शाम्भवस्यैव पूजया ।
यतः शम्भोः प्रियतमाः शाम्भवा भस्मभूषणाः ॥ 77

ततः कर्तव्यमनिशं शाम्भवाभ्यर्चनं मुदा ।
सदाशिवकथाभिन्नकथाश्रवणवाचने ॥ 78

शिवद्वेषो दुरन्तोऽसावघोरनरकप्रदः ।
श्रोतव्याः सर्वदाऽनेन सदाशिवकथाः शुभाः ॥ 79

ततस्ता मोक्षदाः श्रौताः सर्वपातकनाशकाः ।
कीर्तनीयो महादेवो जिह्वया पुण्यपूतया ॥ 80

महेशकीर्तनं यस्मान्महापातकनाशकम् ।
भुक्तिमुक्तिप्रदं पुण्यं शिवश्रवणकीर्तनम् ॥ 81

ततस्तैर्यत्नतः कार्यं ब्राह्मणाद्यैर्मुमुक्षुभिः ।
शिवेतरसुरध्यानं शिवद्वेष इति श्रुतिः ॥ 82

स द्वेषः सर्वपुण्यानि विनाशयति सर्वथा ।
एतत्प्रभृतयो द्वेषा बहवः पापहेतवः ॥ 83

तस्मादेतादृशैः पापैः पच्यन्ते नरके जनाः ।

सूतः -

तस्मादेतादृशैर्दोषैर्विमुक्ता ये भवादृशाः ।। 84

तेषां काश्यां भवेच्छ्रद्धा नान्येषां सत्यमुच्यते ।
काशी यतः शिवः साक्षात्ततस्तत्प्रवणा जनाः ।। 85

निर्मुक्ताः पापसङ्घेभ्यो घोरेभ्यः सत्यमुच्यते ।
काशीकथासुधा विप्राः ! दुर्लभा दुर्लभापि सा ।। 86

सुलभा शिवभक्तानां शिवार्थकृतकर्मणाम् ।
काशीकथासुधां प्राप्य तपोध्यानसमाधिभिः ।। 87

तत्प्राप्त्यर्थं यतस्तेषामुपयोगः श्रुतिश्रुतः ।
काशीकथासुधां प्राप्य ये पिबन्ति मुहुर्मुहुः ।। 88

ते शिवानुगृहीतास्ते पूजनीया मनीषिभिः ।
काशीकथा शिवकथा सा कथा मोक्षदायिनी ।। 89

तस्यां कथायां प्रीतिस्तु न शिवानुग्रहं विना ।
निष्कलं निर्गुणं ब्रह्म शिवः काशीति गीयते ।। 90

तस्यां प्रीतिरनन्तानां तपसां फलमुच्यते ।
ततस्तत्प्रीतिरुत्कृष्टा तपसां च फलं द्विजाः ।। 91

काशीमूर्तिः शिवस्येव मूर्तिभेदेन तिष्ठति ।
काशीमूर्तिः शिवस्येति वदन्ति श्रुतयो मताः ॥ 92

मूर्तयः सन्ति विविधाः शिवस्य परमात्मनः ।
तासु मूर्तिषु काश्येव शिवप्रियतमा स्मृता ॥ 93

काशीमूर्तिं शिवाकारां शिवे दृष्ट्वा मनोरमाम् ।
शिवो दृष्ट्वा भवानीं च प्रीतो भवति सर्वथा ॥ 94

यदा संप्राप कैलासात्काशीमूर्तिं महेश्वरः ।
तदा प्राह महादेवं भवानी भक्तवत्सलम् ॥ 95

श्रीगौर्युवाच -

शिव सर्वज्ञ सर्वात्मन् किं काशीप्राप्तिसाधनम् ।
एतत्सर्वं विशेषेण निरूपय कृपानिधे ॥ 96

ईश्वरः -

मयि भक्तिरविच्छिन्ना या मदभ्यर्चनोद्भवा ।
सा भक्तिरेव सुभगे काशीसंप्राप्तिसाधनम् ॥ 97

मदर्चनं च विविधं श्रुतिषु प्रतिपादितम् ।
तादृशेनार्चनेनैव मयि भक्तिः प्रजायते ॥ 98

मद्भक्त इति विज्ञेयः स एव कमलानने ।
यो भस्मनिष्ठः सततं ममैवाराधने रतः ॥ 99

काश्मीरादिषु लिङ्गेषु प्रविष्टं देवतोत्तमम् ।
मामेव योऽर्चयेन्नित्यं स मद्भक्त इति श्रुतः ॥ 100

हिमवत्पर्वतादीनि यानि स्थानानि शोभने ।
तेषु स्थानेषु शैवेन्द्रैर्मदर्थं तप्यते तपः ॥ 101

तेषु तेषु तपस्तप्तं यैरनेकयुगावधि ।
तैरेव प्राप्यते काशी मत्स्वरूपा वरानने ॥ 102

गिरिजे सुलभो नाहं परं त्वत्यन्तदुर्लभः ।
तथापि सुलभोऽत्यन्तं शैवधर्मरतात्मनाम् ॥ 103

पुरा हिमाद्रिशिखरे नानारत्नविराजिते ।
ब्रह्मविष्ण्वादयो देवाः स्थिता मल्लिङ्गपूजकाः ॥ 104

ऋषयः पितरः साध्या गन्धर्वाः सिद्धपुङ्गवाः ।
मल्लिङ्गपूजनासक्ताः स्थिताः पूर्वं हिमालये ॥ 105

हिमवत्पर्वते रम्ये सर्वदा मां मुमुक्षवः ।
पूजयन्त्यहिकण्ठेशं निर्वाणपदकाङ्क्षया ॥ 106

तत्रैकदा काश्यपाद्या ऋषयो ब्रह्मवादिनः ।
मामाराध्य स्थिता देवि हेमपद्मादिभिर्मुदा ॥ 107

तदा कण्वः समागत्य स्नात्वाच्छे मानसे जले ।
मानसेशं समभ्यर्च्य काश्यपं प्राह सादरम् ॥ 108

कण्व उवाच -

संसारदावखिन्नानां मर्त्यानामकृतात्मनाम् ।
घोरसंसारविच्छेदः कथं भवति सत्वरम् ॥ 109

किमर्चनीयं किं ध्येयं किं वा सर्वार्थदं महः ।
किमाराध्यं किमाशास्यं तद्वदस्व महामुने ॥ 110

काश्यप उवाच -

शिवाभिधं महः सेव्यं सर्ववेदान्तसम्मतम् ।
तत्सेवयैव सर्वेषां मुक्तिर्भवति शाश्वती ॥ 111

सच्चिदानन्दमद्वैतं यन्महः शिवसंज्ञितम् ।
तन्महः सततं सेव्यमन्यत्त्यक्त्वाखिलं मुने ॥ 112

तुरीयमेकं विमलं शिवं मत्वा यथार्थतः ।
ये भवन्ति शिवं नित्यं न ते संसारभागिनः ॥ 113

ये मायातीतमद्वैतं शिवमेव भजन्ति ते ।
कदापि जननीगर्भं न विशन्त्येव सर्वथा ॥ 114

संसारदन्दशूकेन सन्दष्टा ये मुहुर्मुहुः ।
ते तद्विषाद्विमुच्यन्ते शिवसेवौषधाशनाः ॥ 115

संसारसागरोद्धारा शिवसेवारतिः शुभा ।
ततः सर्वात्मना नित्यं कर्तव्यं शिवसेवनम् ॥ 116

संसारसागरे घोरे ते मज्जन्ति मुहुर्मुहुः ।
ये मुहुर्न भजन्तीशं शिवं संसारतारकम् ॥ 117

अनन्यशरणा नित्यं शिवमव्यभिचारतः ।
ये भजन्त्यन्वहं भक्त्या ते यान्ति शिवमद्वयम् ॥ 118

ब्रहुपुण्यफलैः कण्व शिवे भक्तिः प्रजायते ।
साप्यनन्ततपोधर्मैर्भवत्यव्यभिचारिणी ॥ 119

येषां चेतस्तपःपूतं तेषामेव महात्मनाम् ।
जायते गिरिजाकान्ते भक्तिरव्यभिचारिणी ॥ 120

या भक्तिः श्रीमहादेवे भवत्यव्यभिचारिणी ।
सैव मोक्षप्रदेत्याहुर्वेदाः सर्वेऽपि सर्वदा ॥ 121

ब्रह्मविष्ण्वादिदेवानामधिपं गिरिजाधिपम् ।
भजन्ति धीराः सततं निष्कलं निर्गुणं शिवम् ॥ 122

रसना यस्य सततं शिवनामरसैषिणी ।
स धन्यः स कृतार्थश्च तीर्णः संसारसागरात् ॥ 123

संसारपाशसम्बद्धस्तावद्भवति मानवः ।
न यावद्भजति प्रीत्या देवदेवं महेश्वरम् ॥ 124

देवोत्तममनाद्यन्तं निरवद्यं महेश्वरम् ।
भजन्ति येऽन्वहं प्रीत्या ते धन्या इति मन्महे ॥ 125

शिवं प्रयान्त्ययत्नेन सर्वेऽपि शिवपूजया ।
अतो नानाविधोपायैः कर्तव्यं शिवपूजनम् ॥ 126

सर्वज्ञः श्रीमहादेवः स सर्वव्यापकोऽपि सन् ।
स्वभक्तानुग्रहायात्र लिङ्गाकारेण तिष्ठति ॥ 127

विभूतिराशयो यत्र यत्र बिल्ववनान्यपि ।
यत्र शैवाः शिवपरास्तत्र सन्निहितः शिवः ॥ 128

यत्र रुद्राक्षतरवो यत्र रुद्राक्षभूषणाः ।
यत्र लिङ्गानि शैवानि तत्र सन्निहितः शिवः ॥ 129

यत्र पञ्चाक्षरासक्ता यत्र श्रीरुद्रपूजकाः ।
यत्र पाशुपताचारास्तत्र सन्निहितः शिवः ॥ 130

विभूतिराशयः सन्ति पश्यात्र शतशो मुने ।
कोटिशः सन्ति पश्यात्र नवबिल्वदलान्यपि ॥ 131

रुद्राक्षवृक्षान्पश्यात्र पक्वरुद्राक्षसंयुतान् ।
कोटिशः सन्ति रुद्राक्षा महारुद्रप्रिया मुने ॥ 132

रुद्राक्षदर्शनेनापि नश्यत्यघकुलं क्षणात् ।
पश्य पश्यात्र रुद्राक्षान्राशीभूताननेकधा ॥ 133

अत्र नानामुखाः सन्ति रुद्राक्षाः शिवसम्मताः ।
रुद्राक्षमालिकां कृत्वा कुरु रुद्राक्षधारणम् ॥ 134

मुखं मुखेन संयोज्य कुरु रुद्राक्षमालिकाम् ।
कण्ठकर्णादिदेशेषु बहुरुद्राक्षमालिकाः ॥ 135

सहस्रमात्रं रुद्राक्षा यस्याङ्गे सन्ति सर्वदा ।
स सर्वदुःखनिर्मुक्तः प्रयाति शिवसन्निधिम् ॥ 136

एतानेकादशमुखान्रुद्राक्षान्पश्य कोटिशः ।
अनर्घ्याननघान्पुण्यान्धारयस्व यथेच्छया ॥ 137

रुद्राक्षधारणं कृत्वा भस्मधारणपूर्वकम् ।
कृतानन्तमहापापोऽप्यनायासेन मुच्यते ॥ 138

मुने केवलभस्माङ्गैः कार्यं रुद्राक्षधारणम् ।
तेषामेवाधिकारोऽस्ति पुण्ये रुद्राक्षधारणे ॥ 139

वेदस्याध्ययनं कार्यमुपनीतैर्यथा तथा ।
रुद्राक्षधारणं कार्यं भस्मोद्धूलनपूर्वकम् ॥ 140

यः शिवं पूजयेद्भक्त्या स मोक्षमधिगच्छति ।
भूतिरुद्राक्षपूताङ्गैः शिवैकपरदैवतैः ॥ 141

पूजितः श्रीमहादेवस्तेभ्यो मोक्षं प्रयच्छति ।
भुक्तिमुक्तिप्रदं मत्वा शिवं शैवाः समाहिताः ॥ 142

पूजयन्त्यतियत्नेन नित्यमव्यभिचारतः ।
न जानीमः शितादन्यं न जानीम इतीश्वरम् ॥ 143

पूजयन्त्यन्वहं भक्त्या संसारच्छेदकारणम् ।
संसारतरुमूलानि महेशार्चनवह्निना ॥ 144

सद्यो भवन्ति दग्धानि निःशेषं प्रबलान्यपि ।
प्ररूढमूलसम्बद्धमहासंसारपादपम् ॥ 145

शैवाः पदनखाग्रेण छित्वा यान्ति परं शिवम् ।
अतः शिवपरो भूत्वा भस्मरुद्राक्षभूषितः ॥ 146

पूजयस्व महादेवं पूजयस्वोत्तमं शिवम् ।
इदं सिद्धिप्रदं क्षेत्रं सिद्धिलिङ्गमिदं मुने ॥ 147

अत्र संसारशान्त्यर्थं पूजयस्व महेश्वरम् ।
शिवाराधनवृष्ट्यैव चित्तगह्वरदाहकः ॥ 148

शान्तो भवत्युज्ज्वलोऽपि संसारवनपावकः ।
पुरा संसारशान्त्यर्थं बहवोऽत्र मुनीश्वराः ॥ 149

महेशाराधनं कृत्वा मुक्ताः संसारबन्धनात् ।
विना शिवार्चनं कण्व संसारो न विनश्यति ॥ 150

अतः संसारशान्त्यर्थं कुरुष्व शिवपूजनम् ।
पुरात्रैव महाशैवाः काशीप्राप्त्यर्थमादरात् ।। 151

तपश्चक्रुर्मुदा घोरं संसारतरणेच्छया ।
इदानीमपि कुर्वन्ति शैवा लिङ्गार्चनप्रियाः ।। 152

काशीप्राप्त्यर्थमत्यर्थं तपो यत्नपुरःसरम् ।
काशीप्राप्त्यैव बहुभिरत्र पूर्वंतपस्यया ।। 153

अत्र तप्तेन तपसा काशी संप्राप्यते द्विजैः ।
अस्य सिद्धेशलिङ्गस्य प्रभावस्तादृशो यतः ।। 154

सार्धार्बुदं द्विजाः पूर्वमत्र कृत्वा तपो मुदा ।
काशीं प्रापुरनायासाच्छ्रीमहेशप्रसादतः ।। 155

अतोऽत्र यत्नतः कार्यं तपः सिद्धिप्रदं द्विजैः ।
निष्कला निरवद्या सा शिवा ब्रह्मस्वरूपिणी ।। 156

दृष्टात्र विष्णुना पूर्वमादिविद्या यशस्विनी ।
तां तादृशीमुमां दृष्ट्वा विष्णुः सन्तुष्टमानसः ।। 157

प्रणम्य दण्डवद्भूमौ पूजयामास सादरम् ।
ततस्तुष्टाव तां विष्णुरादिविद्यां महेश्वरीम् ।। 158

कृताञ्जलिपुटो भूत्वा प्रणम्य च मुहुर्मुहुः ।

**विष्णुरुवाचः -**

जय मातर्जगद्वन्द्ये जय विश्वेश्वरप्रिये ।। 159

जय कल्याणदे भव्ये जय सौभाग्यसंश्रये ।
जय कल्याणनिलये जय वेदान्तसंस्तुते ।। 160

जय पुण्यैकनिलये जय कारुण्यसंश्रये ।
जय वेदान्तसंवेद्ये जय नित्ये निरञ्जने ।। 161

जय विद्यैकनिलये जयापर्णे जयामले ।
जय मञ्जुलमन्दारपुष्पमालाविराजिते ।। 162

जय नीलोत्पलानीलल‍सन्नयनभासुरे ।
जय सर्वकलापूर्णचन्द्रबिम्बनिभानने ।। 163

जय विद्रुमबिम्बाभभव्याधरविराजिते ।
जय दाडिमबीजाभदन्तराजिविराजिते ।। 164

जय शार्ङ्गनिभानीलभ्रूवल्लीसमलङ्कृते ।
जय भृङ्गावलीतुल्यकेशपाशविराजिते ।। 165

जय सिन्दूरसम्बन्धसीमन्तललितालके ।
जय सन्नीरसम्बद्धघुसृणारुणभालके ।। 166

जय कम्बुसमानाभकण्ठमण्डलशोभिते ।
जय हेममृणालाभबाहुवल्लीविराजिते ।। 167

जय कोकनिभारक्तहस्तपद्मविराजिते ।
जय कारुण्यपीयूषपूर्णवक्षोजशोभिते ।। 168

जय कामजयोत्पन्नरोमराजिविराजिते ।
जय त्रिवलिसम्बद्ध मनोहरकृशोदरे ॥ 169

जय सिन्दूरकदलीसन्निभोरुमनोहरे ।
जय देवर्षिगन्धर्वप्रणमत्पदपङ्कजे ॥ 170

जयानवद्ये निर्द्वन्द्वे निर्मले लयवर्जिते ।
जय विद्ये महाविद्ये जयानन्दे जयोत्तमे ॥ 171

जय लीलाविलासार्थस्वीकृतानन्तविग्रहे ।
जय मौनिमनोरम्यसिह्यासनवराश्रये ॥ 172

जय रत्नोच्चनिलयरत्नावलिविराजिते ।
जय दिव्यमणिभ्राजद्धेमाभरणभूषिते ॥ 173

जय मातर्महादेवि जय मातर्महेश्वरि ।
जय मातस्त्रिणयने जय मातः सुरेश्वरि ॥ 174

जय मातः प्रसीद त्वं जय मातः शिवप्रिये ।
जय मातः कृपापूर्णे जय मातः परात्परे ॥ 175

किं ध्यायते त्वया देवि ध्यातव्यं तव किं शिवे ।
ध्येया त्वमेव सर्वेषां भुक्तिमुक्तिप्रदायिनी ॥ 176

ध्येयध्यातव्यशून्या त्वं ध्यानगम्यासि नः शिवे ।
दासास्तवैव सर्वेऽपि वयं ब्रह्मादयः शिवे ॥ 177

दास्यस्तवास्मदादीनां देवानां वनिता: शिवे ।
देवतासार्वभौमस्य शिवस्यार्धाङ्गभागिनी ॥ 178

त्वमस्यतस्त्वया देवि किमत्र ध्यायते वद ।

श्रीपार्वत्युवाच -

शरीरार्धमहं शम्भोर्येन प्राप्स्यामि केशव ॥ 179

तद्दिदानीं ममाचक्ष्व स्तोत्रं शीघ्रफलप्रदम् ।

श्रीविष्णुरुवाच -

शरीरार्धं महेशस्य प्राप्तमेव त्वया शिवे ॥ 180

त्वमेव शिवरूपासि तवाप्राप्यं न विद्यते ।
तथापि पृच्छ्यते देवि लोकानुग्रहकाङ्क्षया ॥ 181

त्वया ततोऽहं वक्ष्यामि स्तोत्रमेकं शिवप्रदम् ।
पुत्रोऽहं तव वक्ष्यामि ततो वात्सल्यभावत: ॥ 182

मया सह त्वया देवि सर्ववेदान्तसंस्तुतम् ।
दृष्टं मया कृतार्थोऽस्मि त्वत्पादाम्बुजवीक्षणात् ॥ 183

यदर्धाङ्गगतासि त्वं कृपया तस्य शङ्करि ।
पूजयन्ति सुरा: सिद्धा मुनयश्च न संशय: ॥ 184

लक्ष्म्याद्याः सुभगा जातास्त्वत्पादाम्बुरुहार्चनात् ।
त्वत्पादपद्मं सततं ध्यायते कमलादिभिः 185

त्वमादिशक्तिः परमा सर्ववेदान्तसंस्तुता ।
त्वमोङ्कारस्वरूपा त्वं सर्ववेदस्वरूपिणी ॥ 186

त्वमाद्यन्तविहीना त्वं सच्चिदानन्दरूपिणी ।
विज्ञानसारिणी साक्षाज्ज्ञानधाराविनोदिनी ॥ 187

कलाकाष्ठामुहूर्तादिकालोन्नयनकारिणी ।
त्वत्त एव समुत्पन्ना वयं ब्रह्मादयः सुराः ॥ 188

त्वत्त एव समुत्पन्ना लोकाः सर्वेऽपि शाम्भवि ।
तव नेत्रमयश्चन्द्रः सूर्योऽग्निश्च महेश्वरि ॥ 189

तवैव मूर्तयः सर्वे पवनाद्याः शिवप्रिये ।
त्वदन्यो दृश्यते नात्र त्वमेव सकलं शिवे ॥ 190

निष्कलासि त्वमेवाम्ब सकला च जगन्मये ।
त्वमेव सकला देवि सृष्टिस्थित्यन्तकारिणी ॥ 191

त्वमेव निष्कला देवि सर्वोपाधिविवर्जिता ।
प्राप्या त्वमेव सर्वेषां मुक्तिरूपा स्वभावतः ॥ 192

त्वामीदृशीं विदित्वैव सच्चिदानन्दलक्षणाम् ।
भजन्ति मुनयः सर्वे नित्यं वेदैः स्तुवन्ति च ॥ 193

ईदृशी त्वं निराकारा साकारा वाद्य दृश्यसे ।
यतस्त्वं ज्ञानगम्यापि भक्तानां दृष्टिगोचरा ॥ 194

त्वं तपोयज्ञदानानां फलदासि शिवप्रिये ।
त्वामुद्दिश्यैव मुनिभिस्तप्यते सततं तपः ॥ 195

सन्तुष्टा तपसा देवि ददासि परमं पदम् ।
सुप्रीतायास्तवोमेऽत्र नादेयं वस्तु दृश्यते ॥ 196

शिवे त्वयैव सृष्टानि वैकुण्ठादिपदान्यपि ।
तानि दत्तानि चास्मभ्यं त्वयैव परया मुदा ॥ 197

यतः शिवत्वमेवासि ततो दत्तं शिवेन तद् ।
तत्त्वयैव ध्रुवं दत्तं सर्वकल्याणसंश्रये ॥ 198

रत्नराशेर्मनोज्ञानि रत्नानीव मया पुरा ।
वेदराशेर्मनोज्ञानि शिवनामानि शोभने ॥ 199

सन्त्यनन्तानि नामानि महादेवस्य शङ्करि ।
तानि सर्वाणि नामानि पावनानि न संशयः ॥ 200

तानि दिव्यानि नामानि प्रसिद्धानि वरानने ।
बहून्यपि शिवे तेषामावृत्तिरतिदुर्लभा ॥ 201

अस्ति गुह्यतमं देवि नाम्नामष्टोत्तरं शतम् ।
शम्भोरहं प्रवक्ष्यामि पठतां शीघ्रकामदम् ॥ 202

श्रीविष्णुरुवाच -

श्रीगणेशाय नमः ।

ओं शिवो महेश्वरः शम्भुः पिनाकी शशिशेखरः ।
वामदेवो विरूपाक्षः कपर्दी नीललोहितः ॥ 203

शङ्करः शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः ।
शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः ॥ 204

भवःशर्वस्त्रिलोकेशः शितिकण्ठः शिवाप्रियः ।
उग्रः कपर्दी कामारिरन्धकासुरसूदनः ॥ 205

गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः ।
भीमः परशुहस्तश्च मृगपाणिर्जटाधरः ॥ 206

कैलासवासी कवची कठोरस्त्रिपुरान्तकः ।
वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः ॥ 207

सामप्रियः स्वरमयस्त्रयीमूर्तिरनीश्वरः ।
सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः ॥ 208

हविर्यज्ञमयः सोमः पञ्चवक्त्रः सदाशिवः ।
विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥ 209

हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः ।
भुजङ्गभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥ 210

कृत्तिवासाः पुरारातिर्भगवान्प्रमथाधिपः ।
मृत्युञ्जयः सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥ 211

व्योमकेशो महासेनजनकश्चारुविक्रमः ।
रुद्रो भूतपतिःस्थाणुरहिर्बुध्न्यो दिगम्बरः ॥ 212

अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः ।
शाश्वतः खण्डपरशुरजः पाशविमोचकः ॥ 213

मृडः पशुपतिर्देवो महादेवोऽव्ययः प्रभुः ।
पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥ 214

भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात् ।
अपवर्गप्रदोऽनन्तस्तारकः परमेश्वरः ॥ 215

**श्रीविष्णुरुवाच -**

इमानि दिव्यनामानि जप्यन्ते सर्वदा मया ।
नामकल्पलतेयं मे सर्वाभीष्टप्रदायिनी ॥ 216

नामान्येतानि सुभगे शिवदानि न संशयः ।
वेदसर्वस्वभूतानि नामान्येतानि वस्तुतः ॥ 217

एतानि यानि नामानि तानि सर्वार्थदानि हि ।
जप्यन्ते सादरं नित्यं मया नियमपूर्वकम् ॥ 218

वेदेषु शिवनामानि श्रेष्ठान्यघहराणि च ।
सन्त्यन्तानि सुभगे वेदेषु विविधेषु च ।। 219

तेभ्यो नामानि सङ्गृह्य कुमाराय महेश्वरः ।
अष्टोत्तरसहस्रं तु पुरा नाम्नामुपादिशत् ।। 220

तानि नामानि दिव्यानि जप्यन्ते सादरं मया ।
इत्युक्त्वा प्रणिपत्याम्बां सम्पूज्य च जनार्दनः ।। 221

ततो जगाम वैकुण्ठं प्रेषितो जगदम्बया ।
शिवमाराधयन्ती सा गिरिजापि ततः शिवम् ।। 222

सम्प्राप शिवरूपा सा भूयः प्राप्तशिवापि सा ।
गौरीलिङ्गमिदं विप्र शर्वाणीनिर्मितं पुरा ।। 223

एतल्लिङ्गार्चनं नृणां मृत्युबाधाविनाशनम् ।
अस्मिँल्लिङ्गे महादेवः प्रादुरासीद्यदा पुरा ।। 224

शिवा तं पूजयामास लिङ्गस्थं परमेश्वरम् ।
त्रिकालमेतल्लिङ्गस्य यः करिष्यति पूजनम् ।। 225

स सर्वाँल्लभते कामान् मोक्षमन्ते न संशयः ।
पुरात्र पुष्पदन्तेन तपस्तप्तं दुरासदम् ।। 226

तत्कृतेनैव तपसा क्षुब्धमासीज्जगत्त्रयम् ।
इन्द्रादयो लोकपालाः क्षुब्धाश्चैव तदा मुने ।। 227

विष्णुलोकं ययुः शीघ्रं ब्रह्मणा च समन्विताः ।
ततस्तानागतान्दृष्ट्वा ज्ञात्वा तत्क्षोभकारणम् ॥ 228

ब्रह्मादीनाह तान्विष्णुरुपवेश्य यथातथम् ।

**श्रीविष्णुरुवाच -**

पुष्पदन्तस्य तपसा भीता यूयं ततो(तथा)वयम् ॥ 229

तथापि वस्तुतो देवा भवतां न भविष्यति ।
यानि सन्त्यधुना देवाः पदान्यस्माकमक्षतम् ॥ 230

तानि तेन न गण्यन्ते पुष्पदन्तेन धीमता ।
स गाणपत्यमधुना लब्धुमिच्छति शङ्करात् ॥ 231

स बलादपि दत्तानि पदान्येतानि नेच्छति ।
वैकुण्ठादीनि सर्वाणि फलानि बहुधा पुरा ॥ 232

तेन लब्धानि नैतेषु लिप्सा तस्य भविष्यति ।
यश्चेदृशोग्रतपसा प्रीणयिष्यति शङ्करम् ॥ 233

स किमस्मत्पदे वाञ्छां करिष्यति वदन्तु नः ।
यः करिष्यति यत्नेन तपो घोरं दुरासदम् ॥ 234

स सर्वदा शिवं प्राप्तुं समुद्युक्तो भविष्यति ।
अतस्तस्माद्भयं त्यक्त्वा यूयं स्वस्वपदे सदा ॥ 235

चर्तध्वं सावधानेन स्वस्वकर्मसु संयताः ।
भ्रमः स्थितो ममाप्येवं सन्निवृत्तः शनैः शनैः ॥ 236

सुखेन स्थीयतां देवा भवद्भिर्गतसंशयैः ।
ततस्ते निर्भया देवाः प्रति जग्मुर्यथागतम् ॥ 237

एतादृशं तपो घोरं पुष्पदन्तश्चकार सः ।
तेनैव तपसा तुष्टः प्रादुरासीन्महेश्वरः ॥ 238

आविर्भूतं महादेवं गौरीलिङ्गान्मनोहरात् ।
पुष्पदन्तो विलोक्याशु पूजयामास सादरम् ॥ 239

ततः प्रणम्य तुष्टाव विनयानंतकन्धरः ।
कृताञ्जलिपुटो भूत्वा पुष्पैः सम्पूज्य चाञ्जलिम् ॥ 240

(भक्तिगद्गदया वाचा तुष्टाव शिवमव्ययम्)

पुष्पदन्त उवाच -

महिम्नः पारं ते परम विदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।
अथावाच्यः सर्वः स्वमतिपरिणामावधि गृण-
न्ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥ 241

अतीतः पन्थानं तव च महिमा वाङ्मनसयो-
रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।

स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥ 242

मधुस्फीता वाचः परममममृतं निर्मितवत-
स्तव ब्रह्मन् किंवागपि सुरगुरोर्विस्मयपदम् ।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनानीत्यर्थेऽस्मिन्पुरमथन बुद्धिर्व्यवजिता ॥ 243

तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्-
त्रयीवस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु ।
अभव्यानामस्मिन्वरद रमणीयामरमणीं
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥ 244

किमीहः किङ्कायः स खलु किमुपायास्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगताम् ॥ 245

अजन्मानो लोकाः किमवयववन्तोऽपि जगता-
मधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्याद्भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥ 246

त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति
    प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
    नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ 247

महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
    कपालं चेतीयत्तव वरद तन्त्रोपकरणम् ।
सुरास्तां तामृद्धिं दधति हि भवद्भ्रूप्रणिहितां
    न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥ 248

ध्रुवं कश्चिद्ब्रूते सकलमपरस्त्वं ध्रुवमिति
    परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।
समस्तेऽप्येतस्मिन्पुरमथन तैर्विस्मित इव
    स्तुवञ्जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता ॥ 249

तवात्मानं(तवैश्वर्यं)यत्नाद्यदुपरि विरिञ्चो(ञ्चिः) हरिरधः
    परिच्छेत्तुं यातावनलमनलस्तम्भवपुषः ।
ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश यत्-
    स्वयं तस्थे ताभ्यां त्वयि किमनुवृत्तिर्न फलति ॥ 250

अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं
    दशास्यो यद्बाहूनभृत रणकण्डूपरवशान् ।

शिरः पद्मश्रेणीरचितचरणाम्भोरुहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥ 251

अमुष्य त्वत्सेवासमधिगतसारं भुजवनं
बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः ।
अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः ॥ 252

यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सती-
मधश्चक्रे बाणः परिजनविधेयस्त्रिभुवनः ।
न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयो-
र्न कस्याप्युन्नत्यै भवति शिरसि(सस्त्व)त्वय्यवनतिः ॥

अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा-
विधेयस्यासीद्यस्त्रिणयन विषं संहृतवतः ।
स कल्माषः कण्ठे न तव कुरुते न श्रियमहो
विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥ 254

असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः ।
स पश्यन्नीश त्वामितरसुरसाधारणमभू-
त्स्मरः स्मर्तव्यात्मा न हि वशिषु पथ्यः परिभवः ॥

महीं पादाघातद्व्रजति सहसा संशयपदं
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्ण ग्रहगणम् ।
मुहुर्द्यौस्थ्यं यात्यनिभृत जटाताडित तटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥ 256

वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।
जगद्द्वीपाकारं जलधिवलयं तेन कृतमि-
त्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥ 257

रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्राकौं रथचरणपाणिः शर इति ।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधि-
र्विधेयैः क्रीडान्त्यो न खलु परतन्त्राः प्रभुधियः ॥ 258

हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन् निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्र वपुषा
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥ 259

क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्मप्रध्वंस्तं फलति पुरुषाराधनमृते ।

अतस्त्वां संप्रेक्ष्य क्रतुषु फलदान प्रतिभुवं
श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः ॥ 260

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता-
मृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः ।
क्रतुभ्रेषस्त्वत्तः क्रतुफलविधान व्यसनिनो
ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः ॥ 261

सतांवर्त्मत्यक्त्वा श्रुतिसमधिगम्यं सहभुवं
घृणामप्युन्मूल्य स्वजनविषयस्नेह गुणिताम् ।
द्विजः कृन्तन्पादे पितरमपराद्धं त्वयि विभो
मनुष्यत्वं सद्यस्त्रिदश परिणामेन विजहौ ॥ 262

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥ 263

स्वलावन्याशंसा धृतमनुषमह्नाय तृणव-
त्पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि ।
यदिस्त्रैणं देवी यमनिरत देहार्धं घटना-
दवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥ 264

स्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचरा-
श्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः ।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तॄणां वरद परमं मङ्गलमसि ॥ 265

मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः ।
यदालोक्याह्लादं ह्रद इव निमज्यामृतमये
दधत्यन्तस्तत्वं किमपि यमिनस्तत्किलभवान् ॥ 266

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणतां बिभ्रति गिरं
न विद्मस्तत्तत्वं वयमिह तु यत्त्वं न भवसि ॥ 267

त्रयीं तिस्रो वृत्तिस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्ण विकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः ।
समस्तं व्यस्तं त्वां शरणद गृणात्योमिदि पदम् ॥ 268

भवःशर्वो रुद्रः पशुपतिरथोग्रः स च महां-
स्तथाभीमेशानाविति यदभिधानाष्टकमिदम् ।

अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते ॥ 269

नमो नेदिष्ठाय प्रिय वरदविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः ।
नमो वर्षिष्ठाय त्रिणयन यविष्ठाय च नमो
नमः सर्वस्मैं ते तदिदमिति शर्वाय च नमः ॥ 270

बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमो
जनसुखकृते सत्वोद्रिक्तौ मृडाय नमो नमः ।
प्रबलतमसे तत्संहारे हराय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवास नमो नमः ॥ 271

कृशपरिणति चेतः क्लेशवश्यं क्वचेदं
क्व च तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः ।
इति चकितममन्दीकृत्य मां भक्तिराधा-
द्वरद चरणयोस्ते वाक्यपुष्पोपहारम् ॥ 272

वपुः प्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न क्वापि क्षणमपि भवन्तं प्रणतवान् ।
नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिमा
नि तीश क्षन्तव्यं तदिदमपराधद्वयमपि ॥ 273

असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी ।
यदि लिखति गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति ॥ 274

असुर सुर मुनीन्द्रैरर्चितस्येन्दुमौले-
र्ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य ।
सकलगुणवरिष्ठः पुष्पदन्ताभिधाना
रुचिरमलधुवृत्तं स्तोत्रमेतच्चकार ॥ 275

अहरहरनवद्यं धूर्जटेः स्तोत्र मेत-
त्पठति परमभक्त्या शुद्धचित्तः पुमान्यः ।
स भवति शिवलोके रुद्रतुल्यस्तथात्र
प्रचुरतर धनायुः पुत्रवान्कीर्तिमांश्च ॥ 276

महेशान्नापरो देवो महिम्नो नापरा स्तुतिः ।
अघोरान्नपरो मन्त्रो नास्ति तत्त्वं गुरोः परम् ॥ 277

कश्यप उवाच-

एवं स्तुतो महादेवः करुणासागरः प्रभुः ।
गाणापत्यं ददौ तस्मै तदैवाश्रितवत्सलः ॥ 278

दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः ।
महिम्नस्तव पाठस्य कलां नार्हन्ति षोडशीम् ॥ 279

एतादृशैस्तपस्तप्तमत्रैव बहुभिः पुरा ।
ते महेश प्रसादेन मुक्ताश्च मुनिसत्तमाः ॥ 280

पुरा विष्णुप्रभृतयः सुरा मोहसमाकुलाः ।
सायं सोमत्रयोदश्यां नार्चयामासुरीश्वरम् ॥ 281

तदा समुद्रे पतिता लक्ष्मीर्विष्णोर्मनोहरा ।
ऐरावतोऽपि पतितो देवेन्द्रेण सहाम्बुधौ ॥ 282

अमृतं चाप यत्तत्तु रत्नैश्चविविधैः सह ।
ततो बभूवुस्ते देवा निस्तेजस्का भयाकुलाः ॥ 283

ततः स्वस्वपदात्सर्वे प्रच्युताः पृथिवीं गताः ।
भूमावगस्त्यं शैवेन्द्रं ददृशुस्ते सुरामुने ॥ 284

प्रणेमुस्ते ततोऽगस्त्यं निस्तेजस्काः सुरामुनिम् ।
विचार्य स ततस्तत्वं विष्णवादीनां कृताकृतम् ॥ 285

तानुवाच ततो धीमान्कुम्भयोनिः शिवार्चकः ।

अगस्त्य उवाच -

भवद्भिरद्यमोहेन न शिवाभ्यर्चनं कृतम् ॥ 286

तेन पापेन भवतामभवत्स्व पदच्युतिः ।
प्राप्याधिकारान्विश्वेशान्मत्ता यूयं वभूविथ ।। 287

भवद्भिस्तन्मदाविष्ठैस्त्यक्तं शङ्करपूजनम् ।
अत एवाधिकारास्ते भवतां प्रच्युताः सुराः ।। 288

समुद्रे पतिता लक्ष्मीरमृतैरावतान्विता ।
रत्नैरश्वेन देवेन संयुताऽनर्चनात्प्रभोः ।। 289

ये नार्चयन्ति गौरीशं पत्रेण पयसाऽपिवा ।
तेषामेतादृशाः क्लेशा भविष्यन्ति पदे पदे ।। 290

ये पूजयन्ति गौरीशं पत्रेण पयसापि वा ।
ते सर्वे भयनिर्मुक्तास्तिष्ठन्ति सुखिनः सदा ।। 291

गौरीशपूजनं त्यक्त्वा आलस्येन श्रमेण वा ।
तेषां क्व सुखलेशस्याप्यन्वयः सम्भविष्यति ।। 292

ये सन्ततं शिवरता शिवपूजारताः सदा ।
तेषां भवेच्छुभं नूनमन्येषामशुभं ध्रुवम् ।। 293

मूर्खाः सम्प्राप्य दुःखानि प्रलपन्ति पुनः पुनः ।
परन्तु दुःखनाशार्यं नार्चयन्ति सदाशिवम् ।। 294

श्रुतः स्मृतो वा दृष्टोवा महादेवः कृपानिधिः ।
ददाति महदैश्वर्यं पूजितश्चेत्परं पदम् ।। 295

एतादृशं महादेवं सर्वं देवशिखामणिम् ।
नार्चयन्ति नरा मूढा भवन्त इव मोहिताः ॥ 296

शिवार्चनार्थं यत्नेन सम्पाद्य कुसुमादिकम् ।
यः पूजयेन्महादेवं स मुक्तो भवति ध्रुवम् ॥ 297

यः पूजयेन्महादेवं कुसुमैरसुमैरपि ।
स पुल्कसो वा भूपोवा न समोऽप्यसमो भवेत् ॥
कल्याणीपतिरीशानः स्मृतोऽपि च स सर्वदा ॥ 298

पदे पदेऽपि कल्याणं तनुते नात्र संशयः ।
यः कालान्तकमश्रान्तं नितान्तं नार्चयिष्यति ॥ 299

स कालकवलः सद्यो विनाकालं भविष्यति ।
लक्ष्म्यादयः शङ्करेण क्षीराब्धौ रक्षिताः शिवम् ॥ 300

पूजयित्वाऽद्य कुर्वन्तु क्षीराब्धिमथनं सुराः ।
ये भजन्त्यनिशं भक्त्या देवदेवं महेश्वरम् ॥ 301

तैर्लभ्यते विना यत्नं स्वाभीप्सितमिदं स्वयम् ।
भवद्भिर्मोहसङ्क्रान्तैः कदाचिन्नार्च्यते शिवः ॥ 302

अतोऽत्र यूयमनिशं शिवपूजापरायणाः ।
श्रद्धाकृतमहादेवपूजनैरतियत्नतः ॥ 303

भवद्भिरब्धिमथनात्प्रेष्टव्यं स्वेष्टमाशु च ।
विघ्ना यदि भविष्यन्ति क्षीराब्धिमथने तदा ॥ 304

विल्वपत्रादिभिः सम्यक्कुर्वन्तु शिवपूजनम् ।
नश्यन्ति विघ्नाः सर्वेऽपि महादेवस्य पूजया ॥ 305

यतो विघ्नहरस्यापि जनको विघ्नहा शिवः ।
विघ्नेशपुत्रो विघ्नेशो यतस्तस्माद्गणाधिपः ॥ 306

विघ्नघ्न इति विख्यातो देवेष्वन्येष्वपि ध्रुवम् ।
असकृद्वा सकृद्वापि यः स्मरेत्साम्बमव्ययम् ॥ 307

कृत्वापि स महारम्भं स तत्फलमवाप्नुयात् ।
यः कार्यारम्भसमये नाराधयति शङ्करम् ॥ 308

स विघ्नौघसमाक्रान्तो भविष्यति पदे पदे ।
विधिवत्पार्वतीनाथः कार्यारम्भेषु पूजितः ॥ 309

संहृत्य विघ्ननिवहान् ददाति फलमुत्तमम् ।
विघ्नदो विघ्नहर्ता च फलदो फलहापि च ॥ 310

शिव एवेति निर्णीतो वेदवेदाङ्गपारगैः ।
नार्चयिष्यति यो भक्त्या पार्वतीप्राणवल्लभम् ॥ 311

स विघ्नवज्रनिहतो निष्फलो निहतो भवेत् ।
अतो भवन्तो यत्नेन पूजयित्वा सदाशिवम् ॥ 312

समुद्रमथनोद्योगं कुर्वन्त्विष्टफलाप्तये ।
मन्थानं मन्दरं कृत्वा शेषरूपेण रज्जुवा ॥ 313

कुर्वन्त्वत्यन्तयत्नेन समुद्रमथनं बुधाः ।
इति तद्वचनं श्रुत्वा विष्णुब्रह्मादयः सुराः ॥ 314

चक्रुः क्षीराब्धिमथनं शिवाराधनपूर्वकम् ।
क्षीराब्धिमथनोद्युक्तान्सुरानीशः सुरार्चितः ॥ 315

आप्याययदहष्टोऽपि सर्वान्तरगतः सदा ।
शिवेनाप्यायिताः देवा विष्णवाद्यास्ते मुहुर्मुहुः ॥ 316

शिवं सम्पूज्य यत्नेन चक्रुश्च मथनं मुदा ।
सत्वरं मथ्यमानस्तैः क्षीराब्धिर्व्याकुलस्तदा ॥ 317

तरङ्गहस्तैरमरान् वारयन्निव संस्थितः ।
ततस्ते मथनोद्युक्ता शिवं संस्मृत्य सत्वरम् ॥ 318

अहं बली बलीत्युक्त्वा चक्रुर्मथनमुद्यताः ।
ततः परं मथ्यमानादालोलात्क्षीरसागरात् ॥ 319

कालकूटः समुत्पन्नो ज्वालामालासमाकुलः ।
ततस्तदब्धिसम्भूतं हालाहलमनुत्तमम् ॥ 320

दृष्ट्वा विहाय मथनं जग्मुः प्रतिदिशं सुराः ।
हा हा किमासीदिदमित्यतित्रस्ता दिवौकसः ॥ 321

पुनः प्राप्ताः कुम्भयोनिं कालकूटहतप्रभाः ।
तानागतान्सुरान्दृष्ट्वा कुम्भयोनिः शिवार्चकः ॥ 322

कालकूटविषभ्रष्टानुवाच प्रीतिपूर्वकम् ।

अगस्त्य उवाच-

अहं बली बलीत्युच्चैर्भवद्भिर्मोहसंवृतैः ॥ 323

विस्मृतः शङ्करस्तस्माद्भयं प्राप्तं न संशयः ।
क्व शक्तिर्भवतामस्ति समुद्रमथने सुराः ॥ 324

श्रीमहेशबलेनैव कृतं तन्मथनं तदा ।
महेशः सर्वजन्तूनां बलदः पुष्टिदः प्रभुः ॥ 325

कर्ता कारयिता चैव शिव एव नियामकः ।
कर्ताऽहमिति मन्वाना नित्यं भ्रान्ता भवादृशाः ॥ 326

बहवः सन्ति भूलोके शिवमायाविमोहिताः ।
जगत्स्रष्टा महादेवः पाति हन्ति च लीलया ॥ 327

पुनः सृजति पातीशः संहरत्यपि लीलया ।
करोति सर्वकर्माणि भगवान्पार्वतीपतिः ॥ 328

न तस्मादपरः कोऽपि कार्यकर्ता श्रुतिश्रुतः ।
समुद्रमथनादीनि महाकार्याणि वस्तुतः ॥ 329

कर्तुं विश्वेश्वरादन्यो न समर्थो न संशयः ।
आप्यायितैर्महेशेन भवद्भिर्मथनं कृतम् ॥ 330

अन्यथा मथने शक्तिर्भवतां क्व भविष्यति ।
महेशानुगृहीतोऽल्पोऽप्यनल्पोऽण्वपि तन्महत् ॥ 331

सदा करोति कार्याणि नान्यः के वा भवादृशः ।
महेशप्रेरितैरेव नरैरप्यमरैरपि ॥ 332

क्रियन्ते खलु कार्याणि नानारूपाणि सादरम् ।
भवादृशा महेशेन यदि न प्रेरितास्तदा ॥ 333

शक्तास्तृणाग्रमप्यल्पं नैव चालयितुं सुराः ।
परतन्त्रैर्भवद्भिस्तु महेशप्रेरणं विना ॥ 334

क्रियन्ते यदि कार्याणि तदानीशं जगद्भवेत् ।
जगद्यदि भवेद्देवाः सर्वमेतदनीश्वरम् ॥ 335

तदा क्षित्यादिके कार्ये को वा कर्ता भविष्यति ।
कार्यं यद्यद्भवेत्तत्तु वस्तुतः कर्त्रपेक्षितम् ॥ 336

कर्तारमनपेक्ष्यैव कार्यं क्वापि न जायते ।
भवादृशानामज्ञानां जगत्कर्तृत्वकल्पने ॥ 337

बाधोऽतिस्फुट एवोक्तो जगत्कर्ता महेश्वरः ।
शिवः क्षित्याद्युपादानभूतः ख्यातो भवत्यतः ॥ 338

जगदीशोऽथ विश्वेश इत्यसौ श्रुतिषु श्रुतः ।
वस्तुतो जगदीशत्वं विश्वेशस्यैव युज्यते ॥ 339

विश्वेशे जगदीशत्वं न्यायप्राप्तमखण्डितम् ।
विश्वेश्वरस्तु विष्णुर्वा ब्रह्मा वा न भविष्यति ॥ 340

यतोऽनयोर्द्वयोरेकः प्रभुर्विश्वेश्वरः पिता ।
नमस्तेअस्तु भगवन्नित्यादिश्रुतिभिः सदा ॥ 341

विश्वेश्वरो महेशान्यो नेति व्यक्तं विपश्चिताम् ।
सोमः पवन इत्यादिश्रुत्या सोमः सदाशिवः ॥ 342

जनिता पवनादीनां विष्णवन्तानामिति श्रुतः ।
ब्रह्माप्ययं समुत्पन्नो विश्वेशाच्चतुराननः ॥ 343

सर्वेऽप्येते सुरा जाता श्रीमहेशान्महौजसः ।
अतः सर्वसुराधीशः सर्वलोकेश्वरः शिवः ॥ 344

वेदैरेवायमर्थस्तु निर्णीतोऽस्ति मुहुर्मुहुः ।
ईशानः सर्वविद्यानामित्यादिश्रुतिभिर्मुहुः ॥ 345

महेशस्यैव कर्तृत्वं निश्चितं नात्र संशयः ।
तस्मात्तमीश्वरं शक्तमविज्ञाय बलं स्वकम् ॥ 346

स्तुतं भवद्भिस्तेनैव कालकूटो विनिर्मितः ।
यतः स्तुतं बलं स्वीयमतः क्रुद्धो महेश्वरः ॥ 347

कालकूटादिकं क्रूरं ससर्ज विषमुत्कटम् ।
शरण्यः शरणं प्राप्यो भवद्भिरधुना शिवः ॥ 348

अन्यथा कालकूटोऽयं समेषां नाशको भवेत् ।
गत्वा हिमगिरिं तत्र गौरीकान्तमनामयम् ॥ 349

पूजयध्वं यथाशास्त्रं सर्वशोकापनुत्तये ।
पुरा भवं तं गन्धर्वाः सोमकासुरनाशकम् ॥ 350

सदेवास्तुष्टुवुर्हृष्टाः केशवं जगतां हितम् ।
तदा तवाभवद्गर्वः सोऽहं सोमकमर्दनः ॥ 351

तेन गर्वेण सर्वेषां सुराणां मोहनं कृतम् ।
मोहितास्ते सुरा भूयो भवन्तं तुष्टुवुर्हरे ॥ 352

तदा समभवद्घोरा लक्ष्मीनाथाऽशरीरवाक् ।
श्रुत्वा तां वाचमनघां सर्वेषां च भयप्रदाम् ॥ 353

सर्वेऽपि कम्पमापन्नास्त्वया च सह केशव ।
त्वया न स्मर्यते किं सा तदासन्नाऽशरीरवाक् ॥ 354

सा मया वक्ष्यते विष्णो श्रृणु तां सावधानतः ।
स्तूयमानं तदा विष्णुं भवन्तं साऽशरीरवाक् ॥ 355

स्तोतव्यो नायमित्याह स्तुत्यस्त्वन्य इति ध्रुवम् ।
पश्यतेहातिदूरस्थं महानलसमप्रभम् ॥ 356

तं हित्वा केशवं देवास्तुत्यमन्यं प्रशंसथ ।
इति श्रुत्वा वचो देवाः सर्वे विस्मयमागताः ॥ 357

तदा तत्पुरुषाभ्याशं पावकं प्रैषयन्भ्रमात् ।
तदा तमाह कोऽसीति पुरुषं द्युमणिप्रभम् ॥ 358

स त्वं क इति संप्राह का शक्तिरिति केशव ।
प्राह तं वह्निरुद्वृत्तो दाहकोऽहमिति ध्रुवम् ॥ 359

तदा तमाह पुरुषस्तृणमेतद्दहेति सः ।
तदा दग्धुं समर्थोऽपि वह्निरत्यन्तमुज्ज्वलः ॥ 360

तृणदाहेऽप्यशक्तः सन् लज्जितोऽभूत्तदा हरे ।
ततो निवृत्तो देवानां प्रविष्टो मध्यमाशु सः ॥ 361

स्ववृत्तान्तमशेषेण जगाद नतकन्धरः ।
ततो वायुर्गतस्तत्र सोऽपि लज्जावशं गतः ॥ 362

ततो यमो गतस्तत्र सोऽपि लज्जासमन्वितः ।
ततस्त्वया गतं तत्र त्वया लज्जा समाश्रिता ॥ 363

ततः सर्वे गता देवास्तेऽपि लज्जासमन्विताः ।
ततः परं परावृत्तं भवद्भिः शम्भुधिक्कृतैः ॥ 364

स वृत्तान्तः कथं विष्णो विस्मृतोऽद्य त्वया वद ॥ 365

ततः सदाशिवः शक्तः सर्वशक्तिप्रपूरकः ।
तच्छक्तिकोटिकोट्यंशा शक्तिर्युष्मास्ववस्थिता ॥ 366

कश्यप उवाच -

इति तद्वचनं श्रुत्वा विष्णुब्रह्मादयः सुराः ।
तत्रागत्य महादेवं पूजयामासुरादरात् ॥ 367

अतस्त्वत्पूजया प्रीतः करुणानिधिरीश्वरः ।
प्रत्यक्षोऽभूदुमाकान्तो नानाविधगणान्वितः ॥ 368

तं दृष्ट्वा श्रीमहादेवमनन्तेन्दुरविप्रभम् ।
स्तोतुमारेभिरे सर्वे ब्रह्मविष्ण्वादयः सुराः ॥ 369

देवा ऊचुः -

नमो नमस्ते भगवन्महेश
नमो नमस्ते भगवन्दयाब्धे ।
नमो नमस्ते वृषभेन्द्रकेतो
नमो नमस्ते निगमैकहेतो ॥ 370

नमो नमस्ते भगवन्निरीह
नमो नमस्ते भगवन्शरण्य ।
नमो नमस्ते भगवन्वरेण्य
नमो नमस्ते भगवन्सुरेश ॥ 371

नमो नमस्ते सकलान्तरङ्ग
नमो नमस्ते धृतसुन्दराङ्ग ।

नमो नमस्ते हृतमन्मथाङ्ग
नमो नमस्ते निगमानुषङ्ग ॥ 372

नमो नमस्ते गिरिजासमेत
नमो नमस्ते गणनाथ वीर ।
नमो नमस्ते जितकालसूत
नमो नमस्ते हृतसृष्टिभूत ॥ 373

नमो नमस्ते सुगुणाभिराम
नमो नमस्ते धृतदिव्यधाम ।
नमो नमस्ते धृतचारुसोम
नमो नमस्ते परिपूर्णकाम ॥ 374

नमो नमस्ते सुखरूपमूर्तये
नमो नमस्तेऽमितपुण्यकीर्तये ।
नमो नमस्ते समवाप्तमूर्तये
नमो नमस्ते निहताखिलार्तये ॥ 375

नमो नमस्ते निहि(हृ)तारिवृत्तये
नमो नमस्ते धृतदन्तिकृत्तये ।
नमो नमस्ते मुनिहृद्यवृत्तये
नमो नमस्ते सुरवन्द्यमूर्तये ॥ 376

नमो नमस्ते सुकृतप्रियाय
नमो नमस्ते गिरिजाधवाय ।
नमो नमस्ते वृषभध्वजाय
नमो नमस्ते वृषवाहनाय ॥ 377

नमो नमस्ते कलुषापहाय
नमो नमस्तेऽमितकामदाय ।
नमो नमस्ते पुरसूदनाय
नमो नमस्ते विबुधोत्तमाय ॥ 37

नमो नमस्तेऽगण्यविभूषणाय
नमो नमस्तेऽमितकारणाय ।
नमो नमस्ते समवीक्षणाय
नमो नमस्ते विषमेक्षणाय ॥ 379

नमो नमस्ते करुणाकराय
नमो नमस्ते कलिनाशकाय ।
नमो नमस्ते सकलौषधाय
नमो नमस्ते सकलामृताय ॥ 380

नमो नमस्तेऽखिलमुक्तिदाय
नमो नमस्तेऽखिलसंस्तुताय ।

नमो नमस्तेऽखिलपूजिताय
नमो नमस्तेऽखिलरक्षकाय ॥ 381

सूत उवाच -

एवं स्तुतो महादेवो विष्णुब्रह्मादिभिः सुरैः ।
कालकूटभयत्रस्तान्सुरानाह सुरार्चितः ॥ 382

श्रीमहादेव उवाच -

भवतां भयमेतस्मात्कालकूटात्समुत्थितम् ।
हरिष्यामि भयं तस्मान्नैव भूयादितः परम् ॥ 383

तावत्क्षयः प्राप्य एव सर्वेषां भवतामयम् ।
यावन्न मामर्चयन्ति मोहगर्ते निपातिताः ॥ 384

सर्वे मदपमानेन भवाब्धौ निपतन्त्यधः ।
मत्सम्मानेन सर्वेऽपि निवर्तन्ते भवाम्बुधेः ॥ 385

यो मामव्यभिचारेण पूजयिष्यन्ति सर्वदा ।
स दुस्तराणि दुःखानि तीर्त्वा सुखमवाप्नुयात् ॥ 386

मद्भक्ता न विनश्यन्ति प्रलयेऽपि ततस्तदा ।
स्तुवन्ति मोदमानास्ते मद्भक्ता मत्परायणाः ॥ 387

नश्यन्ति पर्वताः सर्वे शुष्यन्त्यम्बुधयस्तथा ।
नश्यन्ति महदाद्याश्च मद्भक्तो न विश्यति ॥ 388

सदा तिष्ठन्ति मद्भक्ता नित्यानन्दा निरामयाः ।
न कदापि विनश्यन्ति प्रलयेऽपि शिवप्रियाः ॥ 389

इत्युक्तवति सर्वेशे कालकूटोऽतिभीषणः ।
दिगन्तराणि सन्दह्य सुराभ्याशमुपाययौ ॥ 390

विष्णुब्रह्मादयो दृष्ट्वा कालकूटमुपागतम् ।
तत्प्रभा (तेजो) दग्धसर्वाङ्गाः क्रोशन्तः पतिता भुवि ॥ 391

कालकूटविषप्लुष्टान्विष्णुब्रह्मादिकान्सुरान् ।
ददर्श गिरिजाकान्तः सगणो गिरिजापि तान् ॥ 392

ततः परमुमा प्राह महादेवं कृपानिधिम् ।
विनयावनता भूत्वा कृताञ्जलिपुटा मुने ॥ 393

**श्रीपार्वत्युवाच -**

देव देव महादेव कृपासागर शङ्कर ।
संहरैनं कालकूटं प्रलयानलसन्निभम् ॥ 394

अतिदूरे स्थितं चापि कालकूटं महौजसम् ।
दृष्ट्वैव पतिता भूमौ विष्णुब्रह्मादयः सुराः ।
यद्ययं समुपायाति विष्णुब्रह्मादिसन्निधिम् ॥ 395

तदा दग्धा भविष्यन्ति सर्वे ते सुरसत्तमाः ।
नायं प्रलयकालोऽपि योऽसौ सर्वविनाशकः ॥ 396

अतः पालय देवेश विष्णवादीन्भुवि मूर्च्छितान् ।
महेश कालकूटोऽयं भूभूधरविनाशकृत् ॥ 397

यवसानिव तान्सर्वान् किं न धक्ष्यति सत्वरम् ।
अधक्ष्यमस्य नास्त्येव कालकूटस्य शङ्कर ॥ 398

दृश्यते कालकूटोऽसौ जगन्नाशकरो महान् ।
तन्निवारणमप्यत्र त्वदन्येन महेश्वर ॥ 399

कर्तुं हि शक्यते केन क्षिप्रमेनं निवारय ।
शूलं प्रयोजयाश्वेव कालकूटस्य शान्तये ॥ 400

अन्यथा शीघ्रमेतस्य शक्यं नैव निवारणम् ।

**कश्यप उवाच -**

इत्युक्तः पार्वतीनाथः पार्वत्या करुणानिधिः ॥ 401

शिवामुवाच सर्वज्ञः स्मितपूर्वमिदं वचः ।
शिवे शूलेन सहसा कालकूटनिवारणम् ॥ 402

कर्तव्यमथवा तस्य विनाशं करवाण्यहम् ।
उत कस्तूरिकावत्तं कण्ठे वा धारयाम्यहम् ॥ 403

अथवोल्कावदधुना करवाणि वद प्रिये ।

**श्रीपार्वत्युवाच -**

ब्रह्माण्डमण्डलं प्राप्य(व्याप्य)कालकूटोऽयमागतः ।
एतन्निवारणं शम्भो कथं वाद्य भविष्यति ।। 404

एतान्दग्ध्वा सुरान्सर्वान्ब्रह्माण्डमपि सत्वरम् ।
प्रधक्ष्यत्यधुनैवेश कालकूटोऽयमद्भुतः ।। 405

येन केनापि रूपेण कृतं चेदस्य वारणम् ।
तदा लोका भविष्यन्ति सर्वेऽपि सुखिनः शिव ।। 406

इत्युक्तः श्रीमहादेवः कालकूटं दुरासदम् ।
दधार लीलया कण्ठे कस्तूरीकणवन्मुने ।। 407

ततः समुत्थिताः सर्वे विष्णुब्रह्मादयः सुराः ।
पुष्पवृष्टिरभूद्दिव्या दुन्दुभिध्वनिपूर्वकम् ।। 408

निवृत्तमूर्च्छा विष्ण्वाद्याः सुरास्ते शिवपादुके ।
प्रणम्य तुष्टुवुर्भूयः कृताञ्जलिपुटा मुने ।। 409

**देवा ऊचुः -**

नमः शिवस्वरूपाय शिवायामिततेजसे ।
सच्चिदानन्दरूपाय नमस्ते गिरिजापते ।। 410

नमस्ते देवदेवाय सोमसूर्याग्निचक्षुषे ।
सर्वाधिकाय शर्वाय नमस्ते सुखमूर्तये ।। 411

नमस्ते सर्ववन्द्याय वेदवेद्याय शम्भवे ।
नमस्ते शूलहस्ताय महादेवाय ते नमः ।। 412

निष्कलाय निरीहाय सर्वप्रत्यक्षसाक्षिणे ।
नमस्ते निरवद्याय नमस्ते प्रत्यगात्मने ।। 413

नमस्ते गुणकूटाय नमस्ते गुणरूपिणे ।
नमस्ते गुणसङ्गाय सङ्गहीनाय ते नमः ।। 414

नमस्ते निर्मलायेश महेश शशिशेखर ।
नमस्ते जगतामीश निरीश परमेश्वर ।। 415

सर्वान्तरात्मन्सर्वात्मन्सर्वरूप महेश्वर ।
सर्वाधार निराधार नमस्ते विश्वरूपिणे ।। 416

भवान्शरणमस्माकं सर्वेषामपि शङ्कर ।
न भवन्तं विनाऽस्माकमन्यच्छरणमीश्वर ।। 417

तवैव पादकमलमस्मच्चित्तमधुव्रतैः ।
सर्वदा संश्रितं भूयान्महादेव कृपानिधे ।। 418

महेश तव सामर्थ्यं नास्माभिर्ज्ञायते विभो ।
वेदैरपि न विज्ञातं सत्यं सत्यं न संशयः ।। 419

प्रलयानलसङ्काशः कालकूटोऽयमद्भुतः ।
त्वयास्मत्प्राणरक्षार्थं संहृतः परमेश्वर ।। 420

कालकूटाद्भयं घोरं यत्त्वयाद्य निवारितम् ।
एतद्भयात्त्वदन्यत्र को वा पालयितुं क्षमः ।। 421

असमत्तुल्यो नापराधसहिष्णुर्न त्वया समः ।
नास्मत्कृतापराधानां गणना पार्वतीपते ।। 422

अगणय्याऽधुनास्माकमपराधान्बहूनपि ।
महेश कृतमस्माकं रक्षणं कालकूटतः ।। 423

भवान्या कृतमस्माकमत एव भव त्वया ।
रक्षणं कृतमस्माकं कालकूटभयाद् ध्रुवम् ।। 424

**कश्यप उवाच -**

इति स्तुत्वा सुराः सर्वे शिवपादाम्बुजे ततः ।
प्रणता दण्डवद्भूमौ कुसुमैश्चाप्यपूजयन् ।। 425

महेशः प्रणतो देवैः स्तुतः सम्पूजितश्च तैः ।
क्षीराब्धिमथनं कर्तुं प्रेषयामास तान् पुनः ।। 426

ततः पुनर्महादेवं तत्र सम्पूज्य ते सुराः ।
ममन्थुरब्धिं मुदिताः स्मरन्तः पार्वतीपतिम् ।। 427

ततस्तस्मात्समुत्पन्ना कमला कमलानना ।
अमृतं च समुत्पन्नमैरावतसमन्वितम् ॥ 428

देवाश्वोऽपि समुत्पन्नो नानारत्नसमन्वितः ।
पारिजातश्च सम्भूतो मथ्यमाने महोदधौ ॥ 429

ततः शिवप्रसादेन लक्ष्मीं प्राप हरिर्मुने ।
ऐरावतादीन्प्रापेन्द्रः शिवस्यैव प्रसादतः ॥ 430

अमृतं प्रापुरमराः सर्वे भागानुरूपतः ।
महादेवप्रसादेन विवादेन विना मुने ॥ 431

एवं शिवप्रसादेन देवा लब्धमनोरथाः ।
स्वस्वस्थानानि सम्प्रापुः कीर्तयन्तो महेश्वरम् ॥ 432

अत एव महादेवो भगवान्भक्तवत्सलः ।
सावधानं पूजनीयो भुक्तिमुक्तिफलार्थिभिः ॥ 433

महेशाराधनादन्यन्नास्ति सर्वार्थदायकम् ।
अतः सदा सावधानं पूजनीयो महेश्वरः ॥ 434

पुरात्र नारदं वीक्ष्य हिमवान्मुनिपुङ्गवम् ।
आसनाद्यैः समभ्यर्च्य तद्वृत्तं वेत्तुमब्रवीत् ॥ 435

हिमवानुवाच -

तत्वज्ञस्त्वं मुनिश्रेष्ठ शिवतत्वं वदस्व मे ।
शिवस्य किं परं रूपं यद्रूपध्यानमिष्टदम् ॥ 436

किञ्च सर्वेषु लोकेषु सञ्चारः क्रियते त्वया ।
किं दृष्टं क्षेत्रमुत्कृष्टं यतः श्रेष्ठं न किञ्चन ॥ 437

यत्र दैवात्प्रविष्टोऽपि न यात्यन्यत्र चास्तिकः ।
यतो विनिर्गतो मोहान्नरके निपतिष्यति ॥ 438

कश्यप उवाच -

इति तद्वचनं श्रुत्वा क्षणं ध्यात्वा मुनीश्वरः ।
प्रहृष्टवदनो भूत्वा ततो वक्तुं प्रचक्रमे ॥ 439

नारद उवाच -

हिमवन्पृष्टमिष्टं मे विचरिष्णोरभीष्टदम् ।
इष्टं तच्छिपिविष्टस्याप्यष्टमूर्तेर्विशेषतः ॥ 440

ओङ्कारतत्वमद्वैतं शिवं ज्ञानात्मकं प्रभुम् ।
मोक्षदं प्राहुरमलं वेदवेदार्थपारगाः ॥ 441

यत्प्रसादसमो नास्ति प्रसादोऽन्यस्य वस्तुतः ।
स श्रोतव्य इति श्रुत्या कीर्त्यते भगवान् शिवः ॥ 442

यत्तत्वं न विदुर्देवा वेदाश्च स शिवः परः ।
केन वा ज्ञायते सम्यगवाङ्मनसगोचरः ।। 443

शिवेनानुगृहीता ये सच्चिदानन्दमूर्तिना ।
तैः शिवो ज्ञायते नान्यैरज्ञानवशवर्तिभिः ।। 444

क्षेत्राणि च मया दृष्टान्यनेकानि सहस्रधा ।
काशीक्षेत्रेसमं लोके न दृष्टं क्वापि शैलराट् ।। 445

चतुर्दशापि भुवनान्येकस्मिन्दिवसे मया ।
दृश्यन्ते तेषु सर्वेषु काश्येकैव विमुक्तिदा ।। 446

काशीपरतरं क्षेत्रं क्षेत्राणामधिदैवतम् ।
भुक्तिमुक्तिप्रदं पुण्यं पावनानां च पावनम् ।। 447

तपोदानादिधर्माणामनन्तानां परं फलम् ।
यत्प्राप्त्याऽऽहुश्च सा काशी काश्यते सर्वदा यतः ।। 448

परात्परतरं यत्तु तत्परात्परतः शिवः ।
स एव काशी काशीति कथ्यते किं ततोऽधिकम् ।। 449

काशी स्मृतापि संसारमूलनिर्मूलनक्षमा ।
सा साक्षात्सेविता शैवैर्मोक्षदा भवति ध्रुवम् ।। 450

हन्त्यघं स्मृतिमात्रेण दृष्ट्वा पुण्यं तनोति या ।
सा निर्वाणैकनिलया काशी विश्वेश्वरालया ।। 451

यस्यां शिवोऽपि सततं श्रीमद्विश्वेश्वराभिधे ।
लिङ्गे जागर्ति सा काशी कलिकल्मषनाशिनी ॥ 452

चतर्दशापि भुवनान्येकतस्तुलितान्यपि ।
काशीकोट्यम्शकोट्यम्शतुल्यानि न कदाचन ॥ 453

के वा वर्णयितुं शक्ता काशीं मुक्तिप्रदायिनीम् ।
काशीप्रभावो वेदैश्चाप्यभिष्टोतुं न शक्यते ॥ 454

तिरस्क्रियन्ते ब्रह्माद्याः काशीस्थैर्मशकैरपि ।
अत एतादृशीं काशीं को नु वर्णयितुं क्षमः ॥ 455

च्यवन्ते ब्रह्मसदनाद्वैकुण्ठादपि वस्तुतः ।
महाप्रलयकालेऽपि न काशीवासिनां च्युतिः ॥ 456

एकार्णवेऽपि सञ्जाते त्रिशूलाग्रेण काशिका ।
ऊर्ध्वं न याति विश्वेशः सा काशी केनमीयते ॥ 457

तृणाय मन्यते हीन्द्रं काशीस्थः पुल्कसोऽप्यतः ।
काशीपुरीसमं वस्तु कुत्र केनोपमीयते ॥ 458

यस्यां भवानी सततं भवभीमभयापहा ।
ददाति परमामृद्धिं सा काशी भुक्तिमुक्तिदा ॥ 459

यस्यां तनुव्यये जन्तोर्मुक्तिर्हस्तगता ध्रुवम् ।
सद्यो भवति शुद्धस्य सा काशी सेव्यते बुधैः ॥ 460

काशीनारप्रदानेन पितरः पूर्वमादरात् ।
नारदस्त्वं नारदोऽसीत्युक्त्वा मुक्तास्ततः परम् ॥ 461

किं वक्तव्यं मया तत्वं काश्या या कल्मषापहा ।
एतावदेव यत्काशीतत्वं ज्ञातं मयाधुना ॥ 462

इदं शिवप्रसादस्य लेशेनेत्यवगम्यताम् ।
पुरा दृष्टानि सर्वाणि भुवनानि यथेच्छया ॥ 463

ततो गतं ब्रह्मलोकं ततो मामाह विश्वसृट् ।

**ब्रह्मोवाच -**

अस्मिन्प्रदेशे किं दृष्टं काश्यामपि विशेषतः । 464

तद्वदस्वेति मां दृष्ट्वा काशीध्यानपरोऽभवत् ।
ततः काश्यन्यदेशानां वार्ता सर्वा मयोदिता ॥ 465

काशीवार्तां वदश्वेति पुनर्मामाह विश्वसृट् ।
काशी दृष्टैव न मया कदाचिदपि वस्तुतः ॥ 466

तद्वार्ताऽतः कथं ज्ञेया यद्वार्ताप्यघहारिणी ।
इति मद्वचनं श्रुत्वा विधिः कारुणिकोऽब्रवीत् ॥ 467

त्वया काशी न दृष्टा यत्तव जन्म वृथाऽभवत् ।
तदुक्तं वचनं श्रुत्वा दुःखितोऽहं तमब्रवम् ॥ 468

काशी प्राप्तिकरं पुण्यं मह्यं ब्रूहीति सादरम् ।
इति मद्वचनं श्रुत्वा काशी तत्वविदब्जजः ।। 469

मामाह श्रुतितत्वज्ञो विश्वसृड्भावयन् शिवम् ।

**ब्रह्मोवाच -**

काशी श्रीमन्महादेवप्रसादेन भविष्यति ।। 470

महादेवप्रसादार्थं पूजयस्व महेश्वरम् ।
पुण्येऽस्मिन्कार्तिके मासि सोमवारेषु शङ्करम् ।। 471

उपोष्याभ्यर्थय प्रीत्या निशि यामचतुष्टये ।
अस्य कार्तिकमासस्य चत्वारः सोमवासराः ।। 472

पुण्येष्वेतेषु सर्वेषु निशि पूजय शङ्करम् ।
शिवस्योमासमेतस्य वासरः सोमवासरः ।। 473

तस्मिन्नभ्यर्चिते शम्भौ प्रसीदति महेश्वरः ।
अद्यैव याहि केदारं तत्रोर्जे मासि सादरम् ।। 474

पूजयित्वा महादेवं काशीं प्राप्स्यसि सर्वथा ।
केदारान्यशिवस्थानेष्वर्चितोऽस्ति त्वया शिवः ।। 475

केदारेऽस्मिन्पुण्यमासि पूजयस्व सदाशिवम् ।
बिल्वपल्लवधुत्तूरद्रोणनीलोत्पलादिभिः ।। 476

पूजयित्वा शिवं धूपैर्दीपाद्यैश्च प्रसादय ।
मयोपेन्द्रेण चन्द्रेण सूर्याद्यैरमरैरपि ।। 477

विशेषेणार्चितः साम्बः कार्तिके मासि सादरम् ।
अम्बाप्युपोष्य विश्वेशं कार्तिके मासि भक्तितः ।। 478

अर्चयिष्यन्ति हेरम्बस्कन्दाद्याश्चार्चयन्ति तम् ।
ऊर्जशुक्लचतुर्दश्यां काश्यां विश्वेश्वरं प्रभुम् ।। 479

समर्चयितुमिन्द्राद्यैर्गम्यतेऽस्माभिरादरात् ।
त्वयापि तद्दिने काशी सम्प्राप्या पुण्ययोगतः ।। 480

अतस्तदर्थं शीघ्रेण प्रसन्नं कुरु शङ्करम् ।
इत्येतद्वचनं श्रुत्वा तन्नत्वाहमिहागतः ।। 481

अत्रोर्जे मसि गौरीशः पूजितश्च मया तदा ।
ततः शिवप्रसादेन काशी पापापनोदिनी ।। 482

भुक्तिमुक्तिप्रदा पुण्या मया प्राप्ता शिवात्मिका ।
ततो विश्वेश्वरो दृष्टः संसारभयनाशकः ।। 483

पूजितश्च मया भक्त्या विश्वेशो भक्तवत्सलः ।
बहुकालं स्थितं काश्यां ततोऽत्र तु कदाचन ।। 484

समागतं तथाऽन्यत्र कदाचिद्गम्यते मया ।

**कश्यप उवाच -**

इति तद्वचनं श्रुत्वा हिमवांस्तुष्टमानसः ।। 485

तं प्रीणयित्वा सम्प्राप काशीं विश्वेश्वरालयम् ।
पुरा शतर्चनोऽत्रैव चकारोग्रं तपो मुने ।। 486

शैवदीक्षापरो नित्यं मोक्षार्थी विगतस्पृहः ।
प्रदुर्भूतो महादेवः प्रीतस्तत्तपसा मुने ।। 487

एतस्मादेव विमलाच्छिवलिङ्गाच्छिवप्रियात् ।
प्रादुर्भूतं महादेवं दृष्ट्वा साम्बं शतर्चनः ।।
सम्पूज्य परया भक्त्या तुष्टाव मुनिसत्तमः ।। 488

**शतर्चन उवाच -**

श्रीमन्महेशविभवे वृषभध्वजाय
ध्वस्तान्धकाय मकरध्वजदाहकाय ।
दम्भापहाय गरुडध्वजपूजिताय
फालेक्षणाय भगवन् सततं नमस्ते ।। 489

पाशापहाय पशुपाशविमोचकाय
पञ्चाननाय परमाद्भुतविक्रमाय ।
पाराय पालितसुरासुरमानवाय
फालेक्षणाय भगवन्सततं नमस्ते ।। 490

मायापहाय मकरन्दरसापहाय (?)
मानप्रदाय मधुराय महेश्वराय ।
मानातिगाय मदमोहविवर्जिताय
फालेक्षणाय भगवन्सततं नमस्ते ॥ 491

मुक्तिप्रदाय मुनिमानसमन्दिराय
मुक्ताकलापकलितामलकुन्तलाय ।
मुग्धाननाय मुदिताय मुकुन्दगाय
फालेक्षणाय भगवन्सततं नमस्ते ॥ 492

सर्वोत्तमाय सकलाय समाश्रयाय
सर्गस्थितिप्रलयकारणकारणाय ।
सत्यप्रियाय सरसाय समङ्गलाय
फलेक्षणाय भगवन्सततं नमस्ते ॥ 493

भद्राय भव्यविभवाय भवौषधाय
भस्मप्रभासमभिभावितभूषणाय ।
अर्केन्दुवह्निनयनाय गणप्रियाय
फालेक्षणाय भगवन्सततं नमस्ते ॥ 494

भव्याय भव्यभगनेत्रविदारकाय
भाग्यास्पदाय भवतापविनाशकाय ।

भक्ताभिवाञ्छितविचित्रफलप्रदाय
फालेक्षणाय .... .... ॥ 495

भोगीन्द्रभोगिमणिराजितकन्धराय
भोगस्फुरन्मरकतोज्जवलकुण्डलाय ।
भोगानुयोगविकसन्मकुटप्रभाय
फालेक्षणाय .... .... ॥ 496

भूताधिपाय भुजगाधिपकङ्कणाय
भूतप्रियाय भुवनस्थितिकारणाय ।
भूभूधरप्रभृतिभूतगणोदराय
फालेक्षणाय .... .... ॥ 497

दिव्याय दिव्यचरिताय दिगम्बराय
दिव्याम्वराय दितिजानलशामकाय ।
दीनार्तिहाय दिननाथनिषेविताय
फालेक्षणाय .... .... ॥ 498

सोमाय सोमरुचिरञ्जितशेखराय
सोमाग्निभानुविततामललोचनाय ।
सोपेन्द्रचन्द्रविधिवन्दितपादु*ाय
फालेक्षणाय .... .... ॥ 499

कालान्तकाय कमनीयजटाधराय
कालाय कालविजयाय कलाधराय ।
कल्याणदाय कनकाचलकार्मुकाय
फालेक्षणाय .... .... ॥ 500

पुण्याय पुण्यहृदयाय पुरातनाय
पूताय पूतजनचिन्तितसत्क्रियाय ।
पुण्यप्रियाय पुरकाननपावकाय
फालेक्षणाय .... .... ॥ 501

विश्वाधिकाय विधिविष्णुविधारकाय
वित्ताधिपाय विबुधाबुधसर्जकाय ।
विस्तारदाय विजयाय विशोधकाय
फालेक्षणाय .... .... ॥ 502

नित्याय नित्यनिरवद्यगुणोज्ज्वलाय
नीतिप्रदाय नियताय निवृत्तिदाय ।
नीहारशैलनिलयाय नियामकाय
फालेक्षणाय .... .... ॥ 503

निर्धर्मकाय निगमागमनिश्रिताय
निर्णीतवस्तुनिचयाय निरामयाय ।

निर्धूतपातकहिताय निरञ्जनाय
फालेक्षणाय .... .... ॥ 504

मृत्युञ्जयाय मृतिकालविवर्जिताय
मृद्धेमरत्नरजताकरवृद्धिकाय ।
मृल्लिङ्गपूजकमनोरथपूरकाय
फालेक्षणाय .... .... ॥ 505

गानप्रियाय गतिर्नृत्तविशारदाय
गाथामयाय गजकृत्तिवरच्छदाय ।
गम्यागमाय गगनाङ्गणनर्तकाय
फालेक्षणाय .... .... ॥ 506

दान्ताय दाननिपुणाय दयामयाय
दारिद्र्यदुःखविपिनैकदवानलाय ।
दानाय दानरहिताय दवप्रियाय
फालेक्षणाय भगवन् सततं नमस्ते ॥ 507

यज्ञाय यज्ञपुरुषाय यशोमयाय
यज्ञादिकर्मफलदाय यतिप्रियाय ।
यज्ञप्रियाय यजनादि[1]यताश्रयाय
फालेक्षणाय भगवन्सततं नमस्ते ॥ 508

---

1 यागकर्माद्यासक्तमुनिजनसमाश्रयत्वात् ॥

श्रीविष्णुनेत्रकमलार्चितपादुकाय
श्रीसेवितादिरतनयातनुसंयुताय ।
श्री[1]भूरुहारुणनवच्छदपूजिताय
फालेक्षणाय भगवन् सततं नमस्ते ॥ 509

**कश्यप उवाच -**

इति स्तुत्वा महादेवं तं प्रणम्य शतर्चनः ।
भूयो रुद्रेण तुष्टाव सूक्तैरन्यैश्च शाम्भवैः ॥ 510

ततः शिवप्रसादेन जीवन्मुक्तः शतर्चनः ।
पुनः कर्तुं समारेभे तपो घोरतरं मुने । 511

एतादृशैस्तपस्तप्तमत्रानेकैर्मुनीश्वरैः ।
मुक्तिश्च बहुभिः प्राप्ता शङ्करानुग्रहान्मुने ॥ 512

यावन्तो निवसन्त्यत्र सततं शिवपूजकाः ।
तावन्तो मुक्तिमिच्छन्ति शिवव्रतपरायणाः ॥ 513

शिवव्रतपरा धन्याः शिवक्षेत्रनिवासिनः ।
पुरोङ्कारं मूर्तिमन्तं शिवध्यानपरायणम् ॥ 514

---

1 बिल्ववृक्षपल्लवपूजितायेत्यर्थः ॥

ब्रह्मविष्ण्वादयो देवा दृष्ट्वा प्रोचुर्मुमुक्षवः ।

देवा ऊचुः -

त्वमोङ्कारोऽस्यतस्तत्वं त्वयैव ज्ञायते ततः ।। 515

किं ध्येयं सततं मुक्त्यै तद्विचार्य वदस्व नः ।

श्री ओङ्कार उवाच -

मोक्षार्थं शिव एवैको ध्येयः सर्वैरहर्निशम् ।। 516

सर्वमन्यत्परित्यज्य सादरं भक्तिपूर्वकम् ।
यः पिता भवतां देवाः स एव शिव उच्यते ।। 517

स एव पार्वतीनाथो यः सर्वसुरसत्तमः ।
स एव श्रीमहादेवः स एव त्रिपुरान्तकः ।। 518

स एव वेदजनकः(?) स एवान्धकसूदनः ।
स एव विष्णुसंहर्ता(?) स एव मदनान्तकः ।। 519

स एव ब्रह्मसंहर्ता(?) स एवेन्द्रविनाशकः ।
स एव ममसंहर्ता(?) स एवाखिलशासकः ।। 520

एतादृशं शिवं मत्वा सच्चिदानन्दलक्षणम् ।
पूजयध्वं प्रयत्नेन मुक्त्यर्थं सर्वसाधनैः ।। 521

शिवार्चनं शिवध्यानं शिवनामानुकीर्तनम् ।
शिवक्षेत्रनिवासश्च मुक्तिसाधनमुच्यते ।। 522

शिवार्चनं च विधिवन्नानावेदान्तसम्मतम् ।
तन्मोक्षदमिति प्रोक्तं महेशेनातितत्वतः ।। 523

पुरा पृष्टो महादेवः शिवया ज्ञानरूपया ।
किं मोक्षदमिति प्रीत्या तदाऽऽह भगवाञ्छिवः ।। 524

**श्रीसदाशिव उवाच -**

शिवे मदर्चनं ध्यानं मन्नाम्नामनुकीर्तनम् ।
मदिष्टक्षेत्रवासश्च मुक्तिसाधनमक्षतम् ।। 525

मदर्चनं च विविधं सद्यः सर्वाघनाशकम् ।
नित्याग्निहोत्रं दर्शश्च चातुर्मास्यं तथैव च ।। 526

मदर्पणधिया कुर्युर्ज्योष्ठयज्ञं तथैव च ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्च त एव हि ।। 527

वेदान्तश्रवणं नित्यं मननं च विशेषतः :
ये कुर्युस्ते सदा विप्र सद्भक्ता इति कीर्त्यते ।। 528

मदर्चनाधिकारोऽपि मद्भक्तस्यैव वस्तुतः ।
मद्भक्ताश्रित एवेति विज्ञेयं सततं बुधैः ।। 529

---

1 मदर्चनाधिकार- ।।

ये वेदमार्गनिरताः स्वप्नेऽप्यन्यपराङ्मुखाः ।
वेदैः सर्वैरहं वेद्यो वेदान्तैरपि शैलजे ॥ 530

मदन्यो वेदवेदान्तवेद्यो नास्त्येव सर्वदा ।
मम तत्वमविज्ञाय वेदबाह्या भवन्त्यतः ॥ 531

भजन्ति वेदबाह्यास्ते मदन्यममरभ्रमात् ।
मदन्यपूजासंसक्ता लब्ध्वा जन्मान्यनेकशः ॥ 532

प्राप्नुवन्त्यतिघोराणि नरकाणि पुनः पुनः ।
वैदिकास्तु सदाचारा वेदोक्ताचारतत्पराः ॥ 533

भजन्ति मां प्रयत्नेन वेदान्यविमुखाः सदा ।
ये मां विश्वाधिकं रुद्रं भजन्त्यन्यपराङ्मुखाः ॥ 534

ते वैदिका इति प्रोक्ता मद्भक्ताश्च त एव हि ।
ये भस्मोद्धूतसर्वाङ्गास्त्रिपुण्ड्राङ्कितमस्तकाः ॥ 535

ते वैदिका इति प्रोक्ता मद्भक्ताश्च त एव हि ।
ये रुद्राक्षलसत्कण्ठा रुद्राक्षकृतकङ्कणाः ॥ 536

ते वैदिका इति .... .... ।
ये मल्लिङ्गार्चनासक्ता बिल्वपत्रादिभिः सदा ॥ 537

ते वैदिका इति .... .... ।
ये मन्निरीक्षणासक्ताः सन्त्यक्तान्येक्षणाशयाः ॥ 538

ते वैदिका इति .... .... ।
ये मत्पादोदपा नित्यमन्यतीर्थपराङ्मुखाः ॥ 539

ये मन्नैवेद्यपुष्टाङ्गा मद्घ्राताऽऽघ्राणनप्रियाः ।
ते वैदिका इति .... .... ॥ 540

ये मद्भक्तार्चनसंसक्ता मद्भक्तान्यपराङ्मुखाः ।
ते वैदिका इति .... .... ॥ 541

ये मत्क्षेत्रकृतावासास्त्यक्तान्यक्षेत्रसंश्रयाः ।
ते वैदिका इति .... .... ॥ 542

ये नक्तभोजिनो नित्यं सर्वदा सोमवासरे ।
ते वैदिका इति .... .... ॥ 543

ये नित्य[1]कृष्णभूतायामुपोषणपराः सदा ।
ते वैदिका इति .... .... ॥ 544

ये महेश महादेव नीलकण्ठेति वादिनः ।
ते वैदिका इति .... .... ॥ 545

ये शूलपाणे खाट्वङ्गिन्कृत्तिवासेति वादिनः ।
ते वैदिका इति .... .... ॥ 546

---

1 कृष्णचतुर्दश्याम् ॥

ये देवोत्तम देवेश वेदवेद्येति वादिनः ।
ते वैदिका इति .... .... ॥ 547

ये विष्णुपूज्य विश्वात्मन्विधिपूज्येति वादिनः ।
ते वैदिका इति .... .... ॥ 548

ये मृत्युञ्जयेश कामारे त्रिपुरघ्नेति वादिनः ।
ते वैदिका ... ... ॥ 549

ये विष्णुविधिचन्द्रेन्द्रविद्यादातेति वादिनः ।
ते वैदिका इति ... ... ॥ 550

ये सर्वज्ञाऽखिलाधार हर धीरेति वादिनः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्च त एव हि ॥ 551

एतादृशा महाशैवा रुद्रैकपरदैवताः ।
मद्भक्ता इति विज्ञेया वेदमार्गरताः सदा ॥ 552

शिवे सुराणां मर्त्यानां मद्भक्तिर्मदनुग्रहात् ।
भवत्यनन्यया भक्त्या मामेवाभ्युपयन्ति ते ॥ 553

यो मामव्याजभक्त्यैव विज्ञायाभ्यर्चयिष्यति ।
तमहं सर्वदुःखेभ्यो मोचयामि शिवे ध्रुवम् ॥ 554

मल्लिङ्गभक्तिरेवैका संसारार्णवतारिणी ।
नास्ति मद्भक्तिसदृशं संसारार्णवतारकम् ॥ 555

मद्भक्तियुक्तो मामीशं सर्वदेवगणाधिपम् ।
यः पूजयति यत्नेन स मोक्षमधिगच्छति ॥ 556

तिष्ठन्नासन्नटन्शम्भुं यः सदा मां स्मरिष्यति ।
स निर्दग्धमहापापो मामुपैष्यत्यसंशयम् ॥ 557

पुण्यक्षेत्रेषु सर्वेषु पुण्यर्क्षेष्वपि सादरम् ।
क्षीराद्यैः स्नापयेद्यो मां स मोक्षमधिगच्छति ॥ 558

भस्मना स्नापयेद्यो मां शोधितेन शिवे शिवम् ।
स मां प्रविश्य सुभगे मत्स्वरूपो भविष्यति ॥ 559

स्वार्जितैर्बिल्वपत्रैर्मां यः पूजयति भक्तितः ।
स मां प्रविश्य सुभगे मत्स्वरूपो भविष्यति ॥ 560

रुद्राध्यायरतो भूत्वा यो मामन्नैः प्रतर्पयेत् ।
स मां प्रविश्य सुभगे मत्स्वरूपो भविष्यति ॥ 561

यो मां गोघृतसंयुक्तैर्दीपैः सन्दीपयेन्मुदा ।
स मां प्रविश्य ... ... ... ॥ 562

यो मां प्रदक्षिणैर्नित्यं प्रणामैश्चापि तोषयेत् ।
स मां प्रविश्य ... ... ... ॥ 563

यो भस्मधूलितो नित्यं रुद्राध्यायं जपेन्मुदा ।
स मां प्रविश्य ... ... ... ॥ 564

यो भस्मधूलितो नित्यं शैवं पञ्चाक्षरं जपेत् ।
स मां प्रविश्य ... ... ... ॥ 565

यः प्रीणयेत्स्तोत्रपाठैर्नृत्यैश्च करतालनैः ।
स मां प्रविश्य ... ... ... ॥ 566

यो वाचयेन्मत्प्रशंसां सानुमोदं मदालये ।
स मां प्रविश्य ... ... ... ॥ 567

यो मद्भक्तमतिप्रीत्या भोजयेत्पायसादिभिः ।
स मां प्रविश्य ... ... ... ॥ 568

यो मद्भक्ताय च वस्त्राणि दत्वा सम्प्रीणयेन्मुदा ।
स मां प्रविश्य सुभगे ... ... ... ॥ 569

यो मद्भक्ताय च रत्नानि दद्यात्स्वर्णं च सादरम् ।
स मां प्रविश्य ... ... ... ॥ 570

यो मद्भक्ताय रुद्राक्षान्दद्यात्प्रीतिपुरःसरम् ।
स मां प्रविश्य ... ... ... ॥ 571

मद्भक्ताय च यो दद्याद्रत्नलिङ्गानि सादरम् ।
स मां प्रविश्य सुभगे मत्स्वरूपो भविष्यति ॥ 572

एवं मत्कर्मनिरता ममैवानुग्रहाच्छिवे ।
मां प्राप्नुवन्ति ज्वलने हवींषीव न संशयः ॥ 573

मयि यस्य समुद्भूता भक्तिरव्यभिचारिणी ।
स दुःखसागरं तीर्त्वा मयि संविशति प्रिये ।। 574

यस्य भक्तिरविच्छिन्ना मयि जाताऽनपायिनी ।
तस्याहं सुलभो देवि दुर्लभोऽपि न संशयः ।। 575

यो मां यत्नैर्महादेवं भजन्ति श्रद्धयान्विताः ।
भावये तानहं देवि हृदये मणिवत्सदा ।। 576

स्वतन्त्रोऽपि महादेवः सोऽहं भक्तैर्वशीकृतः ।
अवश्योऽप्यहमीशानो मद्भक्तवशगोऽस्म्यहम् ।। 577

मां न जानन्ति सहसा शैवमार्गबहिर्गताः ।
शैवमार्गरता एव जानन्ति भुवि मां शिवे ।। 578

वेदैरपि न विज्ञातं यत्तत्वं मम शाश्वतम् ।
तद्विज्ञातमुमे शैवैर्ममानुग्रहभाजनैः ।। 579

मामनन्यसमं नित्यं देवदेवं पिनाकिनम् ।
विज्ञाय शैवाः सततं पूजयन्ति मुमुक्षवः ।। 580

त्यक्ताहाराः पूजयन्ति केचिच्छैवाः सदापि माम् ।
उपोष्यान्वहमासायमतः सम्पूज्य मां प्रभुम् ।। 581

भोजयित्वा च मद्भक्तान्योऽश्नाति स मम प्रियः ।
नित्यं नक्तव्रतं देवि यः करिष्यति यत्नतः ।। 582

स भूयो गर्भदुःखानि न प्राप्नोत्येव सर्वदा ।
नित्यं नक्तव्रतं देवि सुलभं भुक्तिमुक्तिदम् ॥ 583

तद्विधानं च वक्ष्यामि सावधानमनाः शृणु ।
प्रातरादिषु कालेषु स्नात्वोद्धूल्य यथाविधि ॥ 584

त्रिपुण्ड्रधारणं कार्यं तथा रुद्राक्षधारणम् ।
ततो मृन्मयलिङ्गानामष्टोत्तरशतं क्रमात् ॥ 585

प्रातरादिषु कालेषु पूजनीयं प्रयत्नतः ।
पूजा तिलाक्षतैः कार्या बिल्वपत्रैश्च कोमलैः ॥ 586

करवीरादिपुष्पैश्च तत्तत्कालसमुद्भवैः ।
दीपमाला कल्पनीया कृष्णगोघृतवर्धिता ॥ 587

प्रतिकालं च सा माला कर्तव्या शतसङ्ख्यया ।
प्रतिकालं पलशतं कृष्णगोघृतमुत्तमम् ॥ 588

धूपश्चागरुसारेण कल्पनीयो विशेषतः ।
गोक्षीरपाचितैरन्नैरपूपैर्लड्डुकैरपि ॥ 589

मधुक्षीराज्यसंयुक्तैर्नैवेद्यैरपि कल्पयेत् ।
ताम्बूलं कल्पयित्वाऽथ पुनर्धूपं प्रकल्पयेत् ॥ 590

ततो नीराजनं देयं शतदीपविराजितम् ।
षट्सहस्रं प्रजप्तव्यः शैवः पञ्चाक्षरो मनुः ॥ 591

रुद्राध्यायजपः कार्यो मौनेन विधिपूर्वकम् ।
ततः प्रदक्षिणाः कार्याः यत्नादष्टोत्तरं शतम् ॥ 592

आसायमेवं सम्पूज्य मामनाद्यन्तमव्ययम् ।
सायंकाले ततः कार्यं तथैव मम पूजनम् ॥ 593

ततः परं प्रयत्नेन गोघृतैस्तिलसंयुतैः ।
होमः कार्यो बिल्वपत्रैः सहस्रत्रयमादरात् ॥ 594

भोजनीयास्ततो यत्नान्मद्भक्ताः पायसादिभिः ।
सुवर्णदक्षिणा देया मद्भक्तेभ्यस्ततःपरम् ॥ 595

एवं कृत्वा विधानेन स्वकृतं कर्म सादरम् ।
निवेदनीयं पूजान्ते मह्यं श्रद्धापुरःसरम् ॥ 596

स महापापराशिभ्यो मुक्तो भवति सर्वथा ।
एवं नक्तव्रतं देवि यः करिष्यति यत्नतः ॥ 597

स वंशकोटिसम्युक्तो मत्स्वरूपं प्रयास्यति ।
नक्तव्रतं प्रयत्नेन क्रियते येन सर्वदा ॥ 598

तेन व्रतानि सर्वाणि चीर्णान्येव वरानने ॥ 599

स निराशीति विज्ञेयो यो नक्ताशी सदा भवेत् ।
सर्वेषां तपसां श्रेष्ठं मतं नक्ताशनं शिवे ॥ 600

नक्ताशनरता धीरा भस्मनिष्ठा जितेन्द्रियाः ।
गर्भवासादिदुःखेभ्यो निवर्तन्ते न संशयः ॥ 601

गर्भवासादिदुर्लङ्घ्यमहानरकभीरवः ।
कुर्वन्ति सावधानेन नक्तव्रतमिदं शिवे ॥ 602

पूजा मम प्रियतरा नक्तव्रतरतैः कृता ।
नक्तव्रतरता यस्मान्मम प्रियतमाः प्रिये ॥ 603

यस्य नक्तव्रते श्रद्धा तथा भस्मानुलेपने ।
तथा लिङ्गार्चने श्रद्धा स जीवन्मुक्त उच्यते ॥ 604

यस्य प्रीतिर्मयि श्रद्धा विश्वासोऽपि मदर्चने ।
स ममातिप्रियतमो स ममात्मा वरानने ।
मयि प्रीतिर्न सहसा जायते वस्तुतो नृणाम् ॥ 605

यदि प्रीतिर्मयि भवेत्तदा मुक्तिरदूरतः ।
मुक्तिदोऽहं महादेवो न मत्तोऽन्योऽस्ति मुक्तिदः ॥ 606

यतोऽहं सर्वदेवानामधिपो मुक्तिनायकः ।
मद्भक्ता एव मुच्यन्ते घोरसंसारसागरात् ॥ 607

नान्यभक्ता विमुच्यन्ते संसारात्सत्यमुच्यते ।
शिवे मद्भक्तभक्तानां यो भक्तः सोऽपि मुच्यते ॥ 608

मयि सद्भक्तिमान् श्रेष्ठो मुच्यते नेदमद्भुतम् ।
इत्युक्तं श्रीमहेशेन गौरीं प्रति सुरास्ततः ॥ 609

भजध्वं पार्वतीनाथं मनोवाक्कायकर्मभिः ।
मनसा कर्मणा वाचा शिवं यो भजते सदा ॥ 610

तं तारयति गौरीशो घोरसंसारसागरात् ।
महेशार्चनमेवैकं भुक्तिमुक्तिप्रदं स्मृतम् ॥ 611

तदेव घोरसंसारमहासागरतारकम् ।
श्रीमहेश महेशेति महेशेति त्रिरुच्चरन् ॥ 612

सद्यो महाघसङ्घेभ्यो मुच्यते नात्र संशयः ।
महेशेति परं नाम भुक्तिमुक्तिप्रदं स्मृतम् ॥ 613

ततस्तदेव सततं स्मर्तव्यं मुक्तिकाङ्क्षिभिः ।
मुक्तिकान्ताऽऽकर्षकोऽसौ शिवमन्त्रः श्रुतिश्रुतः ॥ 614

गोपनीयोऽपि मोक्षार्थं वेदान्तैः प्रकटीकृतः ।
अतो महेश्वरं साम्बं सावधानेन सन्ततम् ॥ 615

भजध्वं भवसन्तापविच्छित्त्यर्थं मुदा सुराः ।
शिवान्यो न गतिर्यस्माद्भवतां मुक्तिकाङ्क्षिणाम् ॥ 616

ततो भजध्वं मुक्त्यर्थं शिवमेव सदा मुदा ।
मोक्षार्थी यः शिवादन्यमाराधयितुमिच्छति ॥ 617

स उन्मत्त इति ज्ञेयो वेदमार्गबहिष्कृतः ।
तृप्त्यर्थं कण्टकग्रासी यथा तृप्तिं न विन्दति ॥ 618

शिवेतरस्ततस्तद्वन्न मुक्तिमभिविन्दति ।
शिवेतरार्चने श्रद्धा यस्य सञ्जायते भ्रमात् ।। 619

तज्जन्म गतमेवात्र वृथा कण्टकजन्मवत् ।
न वरं तादृशं जन्म यत्प्राप्य भुवि मानवः ।। 620

शिवेतरार्चने श्रद्धां कुरुते मोहसंयुतः ।
जन्म तादृग्वरं देवा यादृशं प्राप्य मानवः ।। 621

महेशाराधने श्रद्धां कुरुते भुक्तिमुक्तिदम् ।
गर्भधारणजं दुःखं तन्मातुःसफलं भवेत् ।। 622

यद्गर्भान्निर्गतः पुत्रः शिवभक्तिरतो भवेत् ।
तदेव कुलमुत्कृष्टं धन्ययित्यभिमन्महे ।। 623

यस्मिन्कुले समुत्पन्नः शिवपूजारतो भवेत् ।
तदेव कुलमुत्कृष्टं धन्यमित्यभिमन्महे ।। 624

किमर्थं बहुनोक्तेन शिवभक्तिर्मुमुक्षुभिः ।
नित्यमव्यभिचारेण कर्तव्या सत्यमुच्यते ।। 625

**कश्यप उवाच -**

इत्योङ्कारवचः श्रुत्वा विष्णुब्रह्मादयः सुराः ।
शिवार्चनरताः सन्तस्तपस्तेपुर्दुरासदम् ।। 626

पश्येमाञ्छाङ्करान्धन्यान्महेशाराधनोत्सुकान् ।
एतेषां शङ्करादन्यः पूज्यो नास्त्येव सर्वदा ॥ 627

शिवान्यं नार्चयन्त्येते स्वप्नेऽपि शिवतत्पराः ।
न ते नमन्ति मोहेनाप्यशिवं संशितव्रताः ॥ 628

नमन्ति चन्द्ररेखाङ्कं त्रिशूलाङ्कं महेश्वरम् ।
बिल्वपत्रादिभिः सम्यक्पूजयन्ति नमन्ति च ॥ 629

शिवलिङ्गं पूजयन्ति प्रणमन्ति स्तुवन्ति च ।
पश्यन्ति च प्रयत्नेव शिवलिङ्गं समर्चितम् ॥ 630

एते निर्व्याजभक्त्यैवं जन्मना शिवपूजकाः ।
शीघ्रं मुक्ता भविष्यन्ति महेशानुग्रहान्मुने ॥ 631

पूजय त्वं महादेवं श्रद्धया परया मुने ।
महादेवप्रसादेन शीघ्रं मुक्तो भविष्यसि ॥ 632

श्रीशिव उवाच -

इति तद्वचनं श्रुत्वा तपस्तेपे ततो मुनिः ।
अन्यैर्मुनिवरैः साकं बहुभिर्मुक्तिकाङ्क्षिभिः ॥ 633

त्यक्त्वाऽन्यपूजां मदनुग्रहेण
मामेव ये सन्ततमर्चयन्ति ।
तेभ्यः शिवोऽभीप्सितमर्थमीशो
दास्याम्यहं भक्तजनाभिसेव्यः ।। 634

।। इति श्रीशिवरहस्ये सप्तमांशे शिवगौरीसंवादे
त्रयोदशोऽध्यायः ।।



## ।। चतुर्दशोऽध्यायः ।।

**श्रीशिव उवाच -**

पुरा नैमिशमाश्रित्य शौनकाद्या मुनीश्वराः ।
प्रणम्य भानुं पप्रच्छुर्मोक्षसाधनमुत्तमम् ।। 1

**मुनय ऊचुः -**

भानो शङ्करतत्वज्ञ शिवपूजापरायण ।
कथं संसारदावाग्नितापशान्तिर्भविष्यति ।। 2

असारतरसंसारेऽमतिवृद्धिः प्रजायते ।
संसारे सारबुद्धिश्च जायते कर्मबन्धनात् ।। 3

असारबुद्धिः संसारे कथं भवति सर्वदा ।
तत्वज्ञानस्य को हेतुः किं वा तत्वं वदस्व मे ।। 4

**श्रीभानुरुवाच -**

पुरा श्रीशैलशिखरे स्कन्दं योगरतं शिवः ।
विलोक्याऽऽयाहि सर्वज्ञ ज्ञात्वा चेत्याह नन्दिनम् ।। 5

शिवाज्ञां शिरसा धृत्वा नन्दिकेशोऽपि हृष्टधीः ।
कैलासाच्चलितः काशीं मध्येमार्गं ददर्श सः ।। 6

दृष्ट्वा काशीं नन्दिकेशो महेशप्रियकृत्तमाम् ।
अवाप परमानन्दं कृतार्थोऽस्मीति सत्तमः ।। 7

प्रविश्य काशीं नन्दीशः शिवगङ्गाजलेऽमले ।
स्नात्वा शीघ्रं पूजयित्वा मणिकर्णीं ययौ ततः ।। 8

मणिकर्ण्यां ततः स्नात्वा कृत्वोद्धूलनमादरात् ।
श्रौतं त्रिपुण्ड्रं रुद्राक्षान्धृत्वा देवं (दृष्ट्वा) महेश्वरम् ।। 9

प्रहृष्टवदनो भूत्वा स्वं कृतार्थममन्यत ।
प्राप्ता काशी पुण्यलभ्या महेशकृपयेति सः ।। 10

मणिकर्णीजले स्थित्वा त्रिः पीत्वा तज्जलं मुदा ।
शिवकृतामृतमेतद्धि जलमित्यप्यमन्यत ।। 11

मणिकर्णीसमं तीर्थं पापशोकविनाशकम् ।
चतुर्दशेषु (?) भुवनेष्वपि नास्तीत्यमन्यत ॥ 12

हेमकुम्भेन सङ्गृह्य मणिकर्णीजलं मुदा ।
श्रीमद्विश्वेश्वरं द्रष्टुं नन्दिकेशो ययौ ततः ॥ 13

ज्ञानवाप्यां ततः स्नात्वा कृत्वा चोद्धूलनादिकम् ।
ज्ञानेशादीन्विलोक्याथ प्राविशन्मुक्तिमण्टपम् ॥ 14

ततो विश्वेश्वरं दृष्ट्वा परमानन्दसंयुतः ।
श्रीमद्विश्वेश्वरं लिङ्गं ज्योतीरूपमसंस्पृशन् ॥ 15

दुग्धाद्यैरभिषिच्यादावभिषिच्य जलैस्ततः ।
पूजयामास रत्नाद्यैर्बिल्वपत्रादिभिस्तथा ॥ 16

नैवेद्य धूपदीपादीन्समर्प्य तदनन्तरम् ।
कृत्वा प्रदक्षिणादींश्च जजाप च षडक्षरम् ॥ 17

कृत्वा ततोऽखिलां यात्रां दृष्टवा विश्वेश्वरं पुनः ।
सम्पूज्य नत्वा स्तुत्वा च हृष्टचित्तो बभूव सः ॥ 18

ततो महेश्वरस्याज्ञां संस्मरन्नन्दिकेश्वरः ।
ययौ श्रीशैलशिखरं यत्र तिष्ठति षण्मुखः ॥ 19

तत्र स्कन्दं समालोक्य नत्वा नन्दी ततश्च तम् ।
पूजयामास बिल्वाद्यैः शिवबुध्या शिवात्मजम् ॥ 20

भक्तिभारसमाक्रान्तः स्कन्दं नत्वा पुनश्च तम् ।
नन्दिकेशो मुहुः सम्यक्पूजयामास सादरम् ।। 21

नन्दिकेशं षण्मुखोऽपि स्वागतं पर्यपृच्छत ।
कुतः समागतो नन्दिन् कुशलं खलु सर्वतः ।। 22

शिवैकशरणस्याद्य तवाभूद्दर्शनं मम ।
शिवभक्तस्वरूपेण शिवः सञ्चरते स्वयम् ।। 23

शिवस्य दर्शनं साक्षान्मङ्गलावहमुत्तमम् ।
सर्वसम्पत्करं यस्माद्भुक्तिमुक्तिफलप्रदम् ।। 24

भूयसा तपसा नन्दिन्सन्तुष्टः पार्वतीपतिः ।
प्रयच्छति दृढां भक्तिं स्वस्मिन् शम्भौ परावरे ।। 25

शरीरं यस्य चरमं तत्यागानन्तरं शिवः ।
मोक्षं ददाति तस्यैव शिवे भक्तिः प्रजायते ।। 26

दुर्लभा दुर्लभा नन्दिन् शिवभक्तिर्न संशयः ।
सा मुक्तिदायिनी भक्तिः शैवीया नान्यसंश्रया ।। 27

श्रद्धयाऽनन्यगामिन्या मुक्तिर्भवति सर्वथा ।
श्रद्धा शिवे हि कर्तव्या सैव मुक्तिप्रदायिनी ।। 28

शैवी श्रद्धा कामदुहा विश्वासः कल्पपादपः ।
सा मोक्षदायिनी तस्माच्छैवी श्रद्धातिदुर्लभा ।। 29

महेश्वरश्रद्धयैव मुक्तिः प्राप्या जनैर्यतः ।
तस्मान्महेश एवेष्टे श्रद्धा कार्या प्रयत्नतः ॥ 30

महादानानि यज्ञाश्च ये च सर्वस्वदक्षिणाः ।
तपांसि यानि घोराणि तेषां तु फलदः शिवः ॥ 31

येनानन्ताः कृताः साङ्गा अश्वमेधाः शिवप्रयाः ।
तेनैव शैवी सम्प्राप्या श्रद्धा नान्येन सर्वथा ॥ 32

तपांसि यानि घोराणि कृतानि बहुधा मुदा ।
तेनैव शैवी सम्प्राप्या श्रद्धा .... .... ॥ 33

गाः कोटिशो येन दत्ताः शैवेभ्यः स्वर्णभूषिताः ।
तेनैव शैवी .... .... ॥ 34

ससुवर्णा येन दत्ता मत्तमातङ्गकोटयः ।
तेनैव .... .... ॥ 35

ससुवर्णा येन दत्तास्तुरङ्गोत्तमकोटयः ।
तेनैव .... .... ॥ 36

ससस्या पृथिवी दत्ता शैवेभ्यो येन सादरम् ।
तेनैव .... .... ॥ 37

येन दत्तानि लिङ्गानि शैवेभ्यो बहुधादरात् ।
तेनैव .... .... ॥ 38

कन्यादानानि बहुधा येन सम्यक्कृतानि वै ।
तेनैव .... .... ॥ 39

मुक्तातुला कृता येन बहुधा साङ्गदक्षिणा ।
तेनैव .... .... ॥ 40

पुष्परागादिरत्नानां तुला येन कृता मुहुः ।
तेनैव .... .... ॥ 41

शैवक्षेत्रेषु धर्मेण येन वासः कृतो मुहुः ।
तेनैव .... .... ॥ 42

किमुक्तेनात्र बहुधा मद्भाग्येन च शाम्भवी ।
भक्तिर्भवित्रीनाल्पेन भाग्येनैतद्ध्रुवं ध्रुवम् ॥ 43

नन्दिकेशः (उवाच) -

स्कन्द सत्यं सत्यमेतत्सत्यं सत्यं न संशयः ॥ 44

यत्त्वयोक्तं वेदतत्वं तदित्येव मतिर्मम ।
शिवतत्वं शिवो वेत्ति ज्ञातं तत्वं त्वयापि तत् ॥ 45

न शिवान्यस्त्वदन्यो वा वेद तत्वं शिवस्य हि ।
त्वत्कृपा मयि सञ्जाता धन्योऽस्म्यहमतः परम् ॥ 46

कृपेयं तव कल्याणी शङ्करस्य कृपा ध्रुवम् ।
यथा गणेश्वरे प्रीतिर्ब्रह्मविष्णवादिवन्दिते ॥ 47

तथा प्रीतिर्मयि ब्रह्मन् क्रियते षण्मुख त्वया ।
सर्वज्ञस्त्वं सर्वगश्च षण्मुख त्वं न संशयः ॥ 48

वद क्षेत्रस्य माहात्म्यं शैवस्यास्याखिलस्य च ।
शिवक्षेत्राणि यान्यन्यानीति तेषां च षण्मुख ॥ 49

माहात्म्यं वद सर्वज्ञ पृच्छतो मम सादरम् ।

**स्कन्द उवाच -**

नन्दिकेशाद्य सन्तोषो जातस्त्वद्वचनान्मम ॥ 50

श्रीशैलस्यास्य माहात्म्यं वक्ष्ये मोक्षप्रदं शुभम् ।
अशीतियोजनाऽऽयामः पर्वतोऽयं शिवात्मकः ॥ 51

प्रभावोऽस्य मया वक्तुं शक्यमेव न संशयः ।
यावन्ति सन्ति ग्रावाणि शैलेऽस्मिन्नन्दिकेश्वर ॥ 52

तावन्ति शिवलिङ्गानि भासन्तेऽत्र न संशयः ।
तृणानि वृक्षा गुल्माश्च लताः पर्णानि जन्तवः ॥ 53

यावन्तः सन्ति तावन्तो (सर्वे ते) लिङ्गान्येव न संशयः ।
अमितान्यत्र तीर्थानि सर्वतीर्थोत्तमानि हि ॥ 54

सर्वार्थदानि सर्वेषां स्मरणादपि सर्वदा ।
पदे पदेऽत्र तीर्थानि लिङ्गानि च पदे पदे ॥ 55

पदे पदे तपःसिद्धिस्तप्तानामत्र जायते ।
सर्वसिद्धिकरं तीर्थमीदृशं दुर्लभं भुवि ॥ 56

पश्य क्षेत्राणि तीर्थानि मुक्तिदान्यत्र पर्वते ।
अत्र पूर्वं तपस्तप्तं काशीप्राप्त्यर्थमास्तिकैः ॥ 57

काशीं प्राप्य ततः सिद्धैरविमुक्ते मुनीश्वरैः ।
मुक्तेश्वरप्रसादेन मुक्तिरासादिता च तैः ॥ 58

इदानीमपि कुर्वन्ति काशीप्राप्त्यर्थमास्तिकाः ।
तपोऽग्रेऽपि करिष्यन्ति सिद्धिक्षेत्रमिदं यतः ॥ 59

पञ्चाग्निमध्यगोऽत्रैव कपिलः सिद्धसत्तमः ।
अनिवृत्तस्तपो नित्यं करोति प्रीतमानसः ॥ 60

तपः पूर्वमनेनैव युगानामयुतं कृतम् ।
प्रज्वाल्याग्निमयं भूयस्तपः कर्तुं प्रचक्रमे ॥ 61

वसिष्ठस्याश्रमः क्रान्तस्तपसा भूयसा मुहुः ।
करोत्यत्र तपो घोरं सन्ततं श्रद्धयान्वितः ॥ 62

तपसोऽस्य प्रभावेण पावकाः स्वयमेव ते ।
प्रज्वलन्त्यनिशं पश्य विनापीन्धनकाष्ठकम् ॥ 63

कण्वोऽपि घोरतपसा शरीरं पावनं स्वकम् ।
चकार पुनरप्यत्र करोत्येव तपो मुदा ॥ 64

गर्गोऽपि तपसा ह्यत्र प्रीणयन्नम्बिकापतिम् ।
ऊर्ध्वबाहुः कथं प्रीत्या पश्यत्यर्कं विलोकयन् ॥ 65

अत्रिणात्र तपस्तप्तमपुत्रेण पुरा मुदा ।
ततः शिवः प्रसन्नोऽभूदम्बिकारमणस्तदा ॥ 66

ततो दृष्ट्वा महादेवमत्रिर्देवोत्तमं शिवम् ।
प्रणम्य पूजयित्वाऽथो तुष्टाव गिरिजापतिम् ॥ 67

अत्रिरुवाच -

नमो नमो निर्गुण निर्विकार
नमो नमो निष्कल निष्प्रपञ्च ।
नमो नमः शान्त नमो नमस्ते
नमो नमस्ते शिव सर्वरूप ॥ 68

नमो नमः साम्ब नमो नमस्ते
नमो नमः शङ्कर सर्वहेतो ।
नमो नमोऽमेयगुणस्वरूप
तुरीयशम्भो सततं नमस्ते ॥ 69

नमो नमोऽनन्तगुणैकसिन्धो
प्रपन्नबन्धो भगवन्नमस्ते ।
नमो नमः शर्व नमो नमस्ते
नमो नमः पर्ण्य नमो नमस्ते ॥ 70

नमो नमस्तेऽस्तु नमोऽस्तु शम्भो
नमो नमस्तेऽस्तु नमोऽस्तु रुद्र ।
नमो नमस्ते गिरिजासहाय
नमो नमस्तेऽस्तु नमो महेश ॥ 71

नमो नमस्तेऽस्तु हिरण्यबाहो
नमो नमस्तेऽस्तु हिरण्यरूप ।
नमो नमस्तेऽस्तु हिरण्यवर्ण
नमो नमस्तेऽस्तु हिरण्यहेतो ॥ 72

नमो नमस्तेऽस्तु शशाङ्कमौले
नमो नमस्तेऽस्तु पिनाकपाणे ।
नमो नमस्तेऽस्तु वृषाङ्ककेतो
नमो नमस्तेऽस्तु नमो गिरीश ॥ 73

नमो नमस्ते पृथिवीस्वरूप
नमो नमस्तेऽस्तु जलस्वरूप ।

तेजःस्वरूपाय नमो नमस्ते
वायुस्वरूपाय नमो नमस्ते ॥ 74

आकाशरूपाय नमो नमस्ते
कालस्वरूपाय नमो नमस्ते ।
नमो नमस्तेऽस्तु दिगात्मने सदा
नमो नमस्ते सकलात्ममूर्तये ॥ 75

नमो नमस्तेऽस्तु कपर्दिने सदा
नमो नमस्तेऽस्तु कपालमालिने ।
नमो नमस्तेऽस्तु नमस्त्विषीमते
नमो नमस्तेऽस्तु निषङ्गिणे नमः ॥ 76

नमो नमस्तेऽस्तु नमोऽस्तु शार्ङ्गिणे
नमो नमस्तेऽस्तु नमोऽस्तु वभ्रुषे ।
नमो नमस्ते शिपिविष्ट शम्भो
नमो नमस्तेऽस्तु हरामरेश ॥ 77

नमो नमस्ते हरिपूजिताङ्घ्रे
नमो नमस्ते हरिनेत्रपाद ।
नमो नमस्ते हरिजन्महेतो
नमो नमस्ते हरिगीतकीर्ते ॥ 78

नमो नमस्ते त्रिधिजन्महेतो
नमो नमस्ते विधिमूर्धहर्तः ।
नमो नमस्ते हरजन्महेतो
नमो नमस्ते हरहर्तृमूर्ते ॥ 79

नमो नमस्तेऽखिलजन्महेतो
नमो नमस्तेऽखिलनाशहेतो ।
नमो नमो निर्मल नित्यरूप
नमो नमो नित्यविचारशुद्ध ॥ 80

नमो नमो नित्यविशुद्ध बुद्ध
नमो नमो निर्भय भीमरूप ।
नमो नमः सर्गविसर्गहेतो
नमो नमः सर्गविनाशहेतो ॥ 81

नमो नमस्ते हर मृत्युमृत्यो
नमो नमस्ते शिवविष्णुमृत्यो ।
नमो नमस्ते जगदेकमृत्यो नमो नमः शङ्कर शङ्करेश
नमो नमः शङ्कर शङ्करेश ॥ 82

**स्कन्द उवाच -**

एवमत्रिस्त्रिणेत्रं तं स्तोत्रैः स्तुत्वा महेश्वरम् ।
मुहुर्मुहुः प्रणम्याग्रे कृताञ्जलिपुटःस्थितः ॥ 83

तमुवाच कृपासिन्धुः स्तुतस्तेन महेश्वरः ।
अदेयमप्यभीष्टं ते दास्यामीति कृपानिधिः ॥ 84

अत्रिरुवाच -

पावितोऽस्मि महादेव प्रसन्नोऽसि यतो मम ।
इतोऽप्यभीष्टमन्यन्मे किमस्ति करुणानिधे ॥ 85

यद्विष्णुनेत्रभ्रमरालीढं ते पदपङ्कजम् ।
मया दृष्टं महादेव किमभीष्टमतः परम् ॥ 86

यत्सिद्धहृत्पङ्कजगं तव पादाब्जमुत्तमम् ।
मया दृष्टं महादेव .... .... ॥ 87

यद् ध्यातं योगिवर्यैस्ते पादमब्जमभीष्टदम् ।
मया दृष्टं महादेव .... .... ॥ 88

विष्णुनेत्रार्चितं यत्ते पदद्वन्द्वमनुत्तमम् ।
मया दृष्टं महादेव .... .... ॥ 89

यत्ते श्रुतिशिरोरत्नं चरणद्वन्द्वमुत्तमम् ।
मया दृष्टं महादेव .... .... ॥ 90

यन्मौनिमानससरोहंसभूतं पदाम्बुजम् ।
मया दृष्टं महादेव .... .... ॥ 91

यदनायासेन मोक्षाय कल्पते पदपङ्कजम् ।
तत्ते दृष्टं महादेव किमभीष्टमतः परम् ॥ 92

पूर्णा मनोरथाः सर्वे यण्पदद्वन्द्वदर्शनात् ।
तत्ते दृष्टं महादेव किमभीष्टमतः परम् ॥ 93

धन्यं मम कुलं जातं यत्पदद्वन्द्वदर्शनात् ।
कृतार्थोऽस्मि कृतार्थोऽस्मि महादेव कृपानिधे ॥ 94

मच्चित्तभ्रमरो नित्यमस्मिस्त्वत्पदपङ्कजे ।
यथा तिष्ठति देवेश तथा कुरु महेश्वर ॥ 95

अस्य देहस्यावसाने मोक्षपात्रं कुरुष्व माम् ।
न त्वदन्यो मोक्षहेतुरिति वेदा वदन्ति यत् ॥ 96

स्कन्द उवाच -

इत्यत्रिवचनं श्रुत्वा शङ्करः करुणानिधिः ।
पुत्रं सर्वसुराराध्यं लभस्वेति वरं ददौ ॥ 97

धर्ममर्थं च कामं च लभस्व मुनिसत्तम ।
मोक्षोऽप्यन्ते मयैवाग्रे देयस्तुभ्यं न संशयः ॥ 98

यन्मदाश्रितचित्तानां मदर्पितसुकर्मणाम् ।
मोक्षदोऽहं मुनिश्रेष्ठ नान्यो मोक्षप्रदः प्रभुः ॥ 99

स्कन्द उवाच -

इत्युक्त्वान्तर्दधे शम्भुर्वेदवेदान्तसंस्तुतः ।
ब्रह्मविष्ण्वादिवन्द्याङ्घ्रिरम्बिकासहितः प्रभुः ॥ 100

ततः पुत्रो बभूवात्रेर्नयनादमितप्रभः ।
सर्वानन्दकरो नित्यं शीतांशुः शुभलक्षणः ॥ 101

कलाः षोडश तस्यासन् अत्रिपुत्रस्य धीमतः ।
अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु ॥ 102

तदा महानुत्सवोऽभूत्सर्वेषां नन्दिकेश्वर ।
तं दृष्ट्वा मुनयः सर्वे तुष्टुवुर्मुदिताननाः ॥ 103

ततोऽत्रिं तुष्टुवुः प्रीत्या मुनयः शङ्करार्चकाः ।
शम्भुराराधितः सम्यक्त्वयात्रेऽत्र मुनीश्वर ॥ 104

शिवप्रसादलब्धोऽयं पुत्रस्तव सुरेष्टदः ।
विना शिवप्रसादेन पुत्रः कुत्रेदृशः प्रभो ॥ 105

ऐहिकामुष्मिकानर्थान् शङ्करो भक्तवत्सलः ।
ददात्येव स्वभक्तेभ्यः स्वतन्त्रः सुरसत्तमः ॥ 106

देवतासार्वभौमोऽयं शङ्करः सर्वकामदः ।
धर्मार्थकाममोक्षाणां दाता साम्बः शिवः स्वयम् ॥ 107

सर्वदेवेष्टदः पुत्रो धीमानमितविक्रमः ।
शिवान्यदेवताभक्त्या प्राप्यः किमीदृशः सुतः ॥ 108

शङ्करो विष्णुतपसा सन्तुष्टो विष्णवे मुदा ।
ददौ वैकुण्ठममलमतो देवोत्तमः शिवः ॥ 109

ब्रह्मणस्तपसा तुष्टस्तस्मै शम्भुः कृपावशात् ।
ब्रह्मलोकं ददौ पूर्वमतो देवोत्तमः शिवः ॥ 110

इन्द्रायेन्द्रस्य तपसा सन्तुष्टः शङ्करो मुदा ।
स्वर्गलोकं ददौ पूर्वमतो देवोत्तमः शिवः ॥ 111

पुराग्नितपसा प्रीतः शङ्करस्त्वग्नये मुदा ।
अग्निलोकं ददौ पूर्वमतो देवोत्तमः शिवः ॥ 112

अन्येभ्योऽपि च देवेभ्यः प्रीतस्तत्तपसा शिवः ।
लोकानिष्टान्ददौ पूर्वमतो देवोत्तमः शिवः ॥ 113

देवाः सर्वे महादेवं स्तुवन्ति विविधं मुदा ।
तदन्यं न स्तुवन्त्येवमतो देवोत्तमः शिवः ॥ 114

मोक्षप्रदाता सर्वेभ्यः स्वभक्तेभ्यो महेश्वरः ।
मोक्षः प्राप्तो महाशैवैरतो देवोत्तमः शिवः ॥ 115

यथा श्रेष्ठो मनुष्येषु ब्राह्मणो ब्रह्मवित्तमः ।
तथा देवेषु सर्वेषु श्रेष्ठः साम्बः शिवः प्रभुः ॥ 116

विद्यामध्ये यथा श्रेष्ठा वेदविद्या प्रकीर्तिता ।
तथा देवेषु सर्वेषु .... .... ॥ 117

गौरुत्तमा कामदोग्ध्री यथा सर्वचतुष्पदाम् ।
तथा देवेषु सर्वेषु .... .... ॥ 118

लोहमध्ये यथा श्रेष्ठं काञ्चनं सर्वकामदम् ।
तथा सर्वेषु देवेषु .... .... ॥ 119

ऐरावतो यथा श्रेष्ठो गजेष्वमितविक्रमः ।
तथा सर्वेषु देवेषु .... .... ॥ 120

हयेषूच्चैःश्रवाः श्रेष्ठो यथाऽमितपराक्रमः ।
तथा सर्वेषु देवेषु .... .... ॥ 121

यथा सर्वमृगश्रेष्ठः सिंहोऽलङ्घ्यपराक्रमः ।
तथा सर्वेषु देवेषु .... .... ॥ 122

कैलासः सर्वलोकेषु यथा श्रेष्ठो नगोत्तमः ।
तथा सर्वेषु देवेषु .... .... ॥ 123

पुष्परागो यथा श्रेष्ठो रत्नेषु विविधेष्वपि ।
तथा सर्वेषु देवेषु .... .... ॥ 124

समुद्रेषु यथा श्रेष्ठः क्षीराब्धिरमितप्रभः ।
तथा सर्वेषु देवेषु .... .... ॥ 125

सिद्धानां कपिलः श्रेष्ठो यथा सिद्धाश्रयस्तथा ।
तथा सर्वेषु देवेषु .... .... ॥ 126

यथा चित्ररथः श्रेष्ठो गन्धर्वेषु बलोन्नतः ।
तथा सर्वेषु देवेषु .... .... ॥ 127

यथाऽगस्त्यो मुनिश्रेष्ठः सर्वदा शिवचिन्तकः ।
तथा सर्वेषु देवेषु .... .... ॥ 128

शिवान्नास्त्यधिको देवः सत्यं सत्यं न संशयः ।
सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ॥ 129

न शिवेन समो देवः सत्यं सत्य न संशयः ।
सत्यं सत्यं .... .... ॥ 130

शङ्करस्य प्रसादेन ज्ञानं भवति धीमताम् ।
शङ्करस्य प्रसादेन मोक्षो भवति धीमताम् ॥ 131

शङ्करः सर्वभावेन शरण्यः शरणार्थिनाम् ।
सेव्यः पूज्यः सदा साम्बः समेषामप्रमादतः ॥ 132

स्कन्द उवाच -

इत्यत्रिर्वचनं श्रुत्वा मुनीनां भावितात्मनाम् ।
तुतोष पूजयामास तान्सर्वान्मुनिपुङ्गवान् ॥ 133

चकार नाम करणं (पुत्रस्य) मुनीनामाज्ञया मुनिः ।
सोमप्रसाद लब्धस्य सोम इत्येव धीमतः । 134

उमया सहितो देवः सोम इत्यभिधीयते ।
उमा ज्ञानमयी शक्तिः सैव विद्येति गीयते ॥ 135

विद्याः सर्वा उमारूपा विद्यानामीश्वरः शिवः ।
विष्णुब्रह्मादिदेवानां प्रभुः साम्बः सदाशिवः ॥ 136

रुद्रपिण्डसमुत्पन्ना ब्राह्मणा रुद्रदेवताः ।
ततः कार्यं द्विजैर्नित्यं श्रीरुद्रस्यैव पूजनम् ॥ 137

देवाश्च ब्राह्मणोत्पन्नाः शिवान्या ब्राह्मणाः सुराः ।
ततो देवैश्च कर्तव्यं रुद्रस्यैव हि पूजनम् ॥ 138

विश्वाधिको ऋषी रुद्रो महान्यद्यपि स स्वयम् ।
तथापि नित्योऽजन्यत्वाद्भावज्ञानात्मकः स्वयम् ॥ 139

स्वाधिकः पूज्यते लोके पूजा च स्वाधिके मता ।
स्वतोऽधमे च तुल्ये वा पूजा नैव विधीयते ॥ 140

न शिवादधिको यस्माद्विश्वाधिक इति श्रुतः ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ 141

स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ।
पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ॥ 142

उतामृतत्वस्येशानो यदन्नेनातिरोहति ।
एतावानस्य महिमा अतोज्यायांश्च पुरुषः ॥ 143

पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ।
त्रिपादूर्ध्वं उदैत्पुरुषो देवदेवोत्तमोत्तमः ॥ 144

पुरुषो वैरुद्र(इत्येव)श्रुतिरेषा यतो मता ।
यो रुद्रोऽग्नावप्सु रुद्रो यो रुद्रस्त्वोषधीष्वपि ॥ 145

यो विश्वा भुवनान्येको विवेश स परात्परः ।
विश्वं भूतं च भुवनं चित्रं च बहुधा तु यत् । 146

तज्जातं जायमानं च रुद्राद्रुद्रात्मकं विदुः ।
ऋचो यजूंषि सामानि रुद्रादेव हि जज्ञिरे ॥ 147

छन्दांसि जज्ञिरे रुद्राज्जज्ञिरे विविधाः प्रजाः ।
सोमो मतीनां जनिता सोमो हि जनिता दिवः ॥ 148

सशैलायाः पृथिव्याश्च जनिता सोम एव हि ।
अग्नेश्च जनिता सोमो नान्यस्य जनिता ध्रुवम् ॥ 149

सूर्याणां जनिता सोमो द्वादशानामपि प्रभुः ।
चन्द्रस्य जनिता सोमः कलानां जनिता तथा ॥ 150

रुद्रस्य जनिता सोमो यमस्य वरुणस्य च ।
विष्णोश्च जनिता सोमो ब्रह्मणः पवनस्य च ॥ 151

नदीनां जनिता सोमः समुद्राणामपि प्रभुः ।
मनसो जनिता सोमः स्कन्दस्य गणपस्य च ।। 152

आकाशस्यापि जनिता चौषधीनामपामपि ।
ब्रह्मणो रुद्रमभ्यर्च्यमनभ्यर्च्य तु यो भ्रमात् ।। 153

भुङ्क्ते स पापकृद्भूयः पापभुग्जायते ध्रुवम् ।
विश्वाधिकमुमाकान्तमसमं देवतोत्तमम् ।। 154

जानाति योऽन्यसदृशं स चण्डालः स मद्यपः ।
पुरा कश्चिदभूद्विप्रो देवदारुवनाश्रितः ।। 155

स सर्वत्र समत्वेन बुद्धिं कृत्वैव संस्थितः ।
तं तथाविधमालोक्य कश्चिच्छैवः शिवार्चकः ।। 156

तमब्रवीद्भ्रान्तचित्तं ज्ञातुं तस्य मनस्तदा ।

शैव उवाच -

त्वया किं ध्यायते नित्यं प्रत्यहं क्रियते च किम् ।। 157

को वा देवेषु विज्ञातो देवोत्तम इति त्वया ।

विप्र उवाच -

देवोत्तमो न कोऽप्यस्ति देवाःसर्वे समाः स्मृताः ।। 158

ध्येयोऽन्यो मम नास्त्येव शरीरं ध्यायते मया ।
यथा रुद्रस्तथा विष्णुर्यथा विष्णुस्तथा विधिः ॥ 159

यथा विधिस्तथैवेन्द्रो यथैवेन्द्रस्तथाऽनलः ।
यथाऽनलस्तथा वायुर्यथावायुस्तथा यमः ॥ 160

यथा यमस्तथाऽन्योऽपि ततः कोऽप्यधिको न हि ।
इति तद्वचनं श्रुत्वा तत्वज्ञः शिवचिन्तकः ॥ 161

तं भ्रान्तचित्तमभ्रान्तं कर्तुमेव वचोऽब्रवीत् ।

**शैव उवाच -**

रे विप्र भ्रान्तचित्तोऽसि वेदः किं विस्मृतस्त्वया ॥ 162

वेदतत्वं न विज्ञातं विस्तारस्ते कथं वद ।
ईशानः सर्वविद्यानामित्यादिर्न श्रुता श्रुतिः ॥ 163

नमस्तेऽस्तु भगवन्नेवं वहुधा वदति श्रुतिः ।
निष्कलं निर्गुणं शान्तमित्यादिर्न श्रुता श्रुतिः ॥ 164

सोमः पवतं इत्यादि रुद्रसूक्तं च विस्मृतम् ।
तत्रास्ति जनिता विष्णोः सोम इत्ययमुत्तमः ॥ 165

यो रुद्र इति वेदोऽपि त्वया न स्मर्यते ध्रुवम् ।
न विश्वं भूतमित्यादिवेदोऽपि स्मर्यते त्वया ॥ 166

हरिं हरन्तमित्यादिवेदो न स्मर्यते त्वया ।
नमस्ते रुद्र इत्यादिवेदसारोऽपि विस्मृतः ॥ 167

सद्योजातं प्रपद्यामीत्यादिवेदोऽपि विस्मृतः ।
न तमीशानमित्यादिवेदोऽपि स्मर्यते त्वया ॥ 168

इमा रुद्राय इत्यादिमन्त्रो न स्मर्यते त्वया ।
तमुष्टुहीति मन्त्रोऽपि स्मर्यते न त्वया ध्रुवम् ॥ 169

कद्रुद्रायेति मन्त्रोऽपि स्मर्यते न त्वया ध्रुवम् ।
किञ्च सर्वेश्वरः शम्भुः सर्वोपनिषदां प्रभुः ॥ 170

सर्वोपनिषदामीशः परमात्मा सदाशिवः ।
य एको भगवानीश ईशानीभिः समीशते ॥ 171

सर्वाँल्लोकानीशते य ईशानीभिः समीयते ।
उद्भवे सम्भवे चैव एक एव शिवः प्रभुः ॥ 172

य एवं विदुरीशानममृतास्ते भवन्ति हि ।
एक एव हि रुद्रोऽयं न द्वितीयोऽयमीश्वरः ॥ 173

पाति हन्ति पुनः सृष्ट्वा पाति हन्ति पुनः पुनः ।
विश्वतश्चक्षुरीशानो विश्वतोऽन्तर्मुखः शिवः ॥ 174

विश्वतोबाहुरनघो विश्वतस्पान्महेश्वरः ।
द्यावाभूमी जनयन्नेक एव सदाशिवः ॥ 175

स बाहुभ्यां सम्पतत्रैर्धमत्येव पुनः पुनः ।
प्रभवश्चोद्भवश्चासीद्रुद्रो विश्वाधिको ऋषिः(?) ॥ 176

ब्रह्मविष्ण्वीशदेवानां यः स एव सदाशिवः ।
हिरण्यगर्भमेवादौ जनयामास शङ्करः ॥ 177

विष्णुं च जनयामास तस्माद्विष्णोः परः शिवः ।
ततश्चेन्द्रमुखान्देवाञ्जनयामास शङ्करः ॥ 178

ततो भूमिं ततो वायुं ततो गगनमीश्वरः ।
ततो नानाविधाञ्जीवान्ससर्जोमामहेश्वरः ॥ 179

ततः समुद्रान्सरितो गिरीनप्योषधीन्परः ।
य एव निष्कलः शान्तो निरवद्यो निरञ्जनः ॥ 180

स एवोमासमेतः सन्सृजत्यवति हन्ति च ।
ततः परं ब्रह्म वरं बृहन्तं साम्बमेव हि ॥ 181

यथा निकायं भूतेषु गूढं सर्वेषु सर्वदा ।
एक एव हि रुद्रोऽयं विश्वस्य परिवेष्टिता ॥ 182

ज्ञात्वा तमीशममृता भवन्त्येव सदाशिवम् ।
महान्तमेतं पुरुषं परस्तात्तमसः परम् ॥ 183

आदित्यवर्णं वेदाश्च न जानन्त्येव शङ्करम् ।
शिवमेव विदित्वाति मृत्युर्नैति तमात्मवान् ॥ 184

न विद्यतेऽयनाय स्याच्चान्यः पन्थाः शिवं विना ।
तस्मात्परं नास्ति परं शिवात्सर्वोत्तमोत्तमः ॥ 185

नास्ति कश्चिच्छिवाज्ज्यायानणीयोऽतस्तमर्चयेत् ।
तेन पूर्णमिदं सर्वं पुरुषेण शिवेन हि ॥ 186

ततो यदुत्तरतरं तदरूपमनामयम् ।
य एनं विदुरीशानममृतास्ते भवन्ति हि ॥ 187

दुःखमेवाभियान्त्यत्ये शिवध्यानपराङ्मुखाः ।
सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ॥ 188

सर्वव्यापी स भगवांस्तस्मात्सर्वगतः शिवः ।
महान्प्रभुर्वै पुरुषः सत्वस्यैकः प्रवर्तकः ॥ 189

सुनिर्मलमिदं शान्तमीशानो ज्योतिरव्ययः ।
अन्तरात्माङ्गुष्ठमात्रः पुरुषोऽयं सदाशिवः ॥ 190

साम्बो जनानां हृदये सन्निविष्टो निरन्तरम् ।
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ॥ 191

सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥ 192

सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत् ।
नवद्वारे पुरे देहे हंसो लीलायते बहिः ॥ 193

वशी सर्वस्यभूतस्य स्थावरस्य चरस्य च ॥ 194

अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति सर्वं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम् ॥ 195

अणोरणीयान्महतोमहीया-
नात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम् ॥ 196

वेदाहमेतमजरं पुराणं
सर्वात्मना सर्वगतं विभुत्वात् ।
जन्मनिरोधं प्रवदन्ति यस्य
यद्ब्रह्मवादिनो प्रवदन्ति नित्यम् ॥ 197

एकवर्णः शक्तियोगादनेको बहुधा शिवः ।
वर्णाननेकानुमया ग्रहीतार्थो (?) ददाति हि ॥ 198

विचैति चान्ते विश्वात्मा विश्वमादौ स शङ्करः ।
संयुनक्तु स नो बुध्या शुभया देवतोत्तमः ॥ 199

स्त्रीरूपः पुरुषाकारः सर्वाकारः सदाशिवः ।
कुमारात्मा कुमार्यात्मा सर्वात्मा विश्वतोमुखः ।। 200

नीलो गौरश्च हरितो लोहिताक्षः सदाशिवः ।
निर्मलो नियतो यन्ता निरवद्यो निराकृतिः ।। 201

छन्दांसि यज्ञाः क्रतवो व्रतानि
भूतं भव्यं यश्च वेदा वदन्ति ।
तस्मान्मायी सृजते विश्वमेतत्
तस्मिंश्चान्ये मायया सन्निरुद्धाः ।। 202

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ।। 203

यो वै योनिमधितिष्ठत्येको
यस्मिन्निदं सं च विचैति सर्वम् ।
तमीशानं वरदं देवमीड्यं
विचार्येमां शान्तिमत्यन्तमेति ।। 204

यो देवानां प्रभवश्चोद्भवश्च
विश्वाधिको रुद्रो महर्षिः ।
हिरण्यगर्भं जनयामास जायमानं
जायमानं च पश्यतः ।। 205

विष्णुं च जनयामास जायमानं च पश्यतः ।
इन्द्रं च जनयामास जायमानं च पश्यतः ॥ 206

वह्निं च जनयामास जायमानं च पश्यतः ।
वरुणं च जनयामास जायमानं च मश्यतः ॥ 207

यमं च जनयामास जायमानं च पश्यतः ।
लोकांश्च जनयामास जायमानांश्च पश्यतः ॥ 208

ईदृशः सर्वगोप्ता स शोभनया
बुद्धया शङ्करः संयुनक्तु ।

यो देवानामधिपो यस्मिन्देवा अधिश्रिताः ।
स एवसर्वदेवेशः शङ्करः परमा गतिः ॥ 209

यस्मिन्सदाशिवो देवाः द्विपदश्च चतुष्पदः ।
तस्मै देवाय हविषा शङ्करायामितात्मने ॥ 210

सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये
विश्वस्य स्रष्टारं तमनेकरूपम् ।
विश्वस्येशं परिवेष्टितारं
ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥ 211

स एव कालो भुवमस्य गोप्ता
विश्वाधिकः सर्वभूतेषु गूढः ।

यस्मिन्युक्ता ब्रह्मर्षयो देवताश्च
तं विज्ञात्वा मृत्युपाशांश्छिनत्ति ॥ 212

घृतात्परं मण्डमिवातिसूक्ष्मं
ज्ञात्वा शिवं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं
ईशं ज्ञात्वा मुच्यते सर्वपाशैः ॥ 213

य एव देवो विश्वकर्मा महात्मा
सदा जनानां हृदये सन्निविष्टः ।
हृदा मनीषा मनसाभिक्लृप्तो
य एवं विदुरमृतास्ते भवन्ति ॥ 214

यदा समस्तं न दिवा न रात्रि-
र्नसन्न चासन् शिव एव केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं
प्रज्ञा च तस्मात्प्रसृता पुराणी ॥ 215

न सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्च नैनम् ।
हृदा मनीषा मनसाभिक्लृप्तो
य एवं विदुरमृतास्ते भवन्ति ॥ 216

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा भान्ति विद्युतः कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥ 217

एको हंसो भुवनस्यास्य मध्ये
स एवाग्निः सलिले सन्निविष्टः ।
तमेवं विदित्वाऽतिमृत्युमेति
नान्यो हेतुर्विद्यतेऽयनाय ॥ 218

नातः परं वेद्यमचिन्त्यरूपं
शिवाच्च साम्बादद्वयादवैमि ।
शिवात्मकं यच्च समस्तमेत-
च्छिवान्न किञ्चिद्व्यतिरिक्तमस्ति ॥ 219

अविज्ञाय महादेवमचिन्त्यविभवं शिवम् ।
अमरा अपि मुह्यन्ति किमन्ये मनुजाधमाः ॥ 220

अवमान्य तमेवेशं निरयं यान्ति दुर्जनाः ।
सम्मानयित्वा तं देवं प्रयान्ति परमं पदम् ॥ 221

पुरा कृतानेकधर्मा दक्षो दक्षप्रजापतिः ।
शिवान्यसुरसंयुक्तो यागं कर्तुं प्रचक्रमे ॥ 222

तस्मिन्यागे समारब्धे सुरा विष्णुपुरोगमाः ।
सर्वेऽप्यागत्य दक्षाय चक्रुः साहाय्यमादरात् ॥ 223

सुरर्षयो नारदाद्याः सर्वे तत्र समागताः ।
दक्षाय जनयामासुः सन्तोषं यागमण्टपे ॥ 224

भौम्यश्च ऋषयो ये च नानादेशसमाश्रिताः ।
ते च सर्वे समगत्य दक्षं चक्रुः प्रहर्षितम् ॥ 225

गन्धर्वाः किन्नराः स्निग्धाः यक्षाश्चातिबलान्विताः ।
उरगाश्च समागत्य दक्षं चक्रुः प्रहर्षितम् ॥ 226

सोमाय राज्ञे या दत्ता यावन्त्यो दक्षकन्यकाः ।
ताश्च सर्वाः समागत्य दक्षं .... .... ॥ 227

देवपत्न्यश्चित्रवेषा याश्च लक्ष्मीपुरोगमाः ।
अमेयारुन्धतीमुख्या ऋषिपत्न्यश्च याः स्थिताः ।
ताश्च सर्वाः .... .... ॥ 228

यक्षगन्धर्वपत्न्यश्च याश्चान्या नागनायिकाः ।
दक्षः स सर्वसम्भारान्सम्प्राप्य तदनन्तरम् ॥ 229

ददौ ऋषीणामार्त्विज्यं श्रौताधिष्ठितचेतसाम् ।
देवा वभूवुर्विष्ण्वाद्याः सदस्या दक्षयन्त्रिताः ॥ 230

क्रतुसंरक्षका जाता गन्धर्वाद्या बलान्विताः ।
एतस्मिन्नन्तरे काले कैलासनिलयं शिवम् ॥ 231

गौरी विनयनम्राङ्गं स्मितपूर्वमभाषत ।

गौर्युवाच -

शम्भो दक्षोऽध्वरं कर्तुमिदानीमुद्यतोऽस्त्यतः ॥ 232

तत्राहं गन्तुमिच्छामि यदाऽऽज्ञा ते तदा प्रभो ।
इति तद्वचनं श्रुत्वा महादेवः कृपानिधिः ॥ 233

उवाच मङ्गलां शुद्धां सर्वज्ञः स्मितपूर्वकम् ।

श्रीमहादेव उवाच -

गन्तुमिच्छसि कल्याणि दक्षयागं प्रति प्रिये ॥ 234

गत्वा सत्वरमायाहि चिरं मा तत्र संवस ।
इत्युक्त्वा प्रेषयामास मङ्गलां मङ्गलापतिः ॥ 235

गणांश्च प्रेषयामास कोटिशोऽम्बिकया सह ।
रत्नच्छत्रार्बुदाकीर्णाश्चामरार्बुदशोभिताः ॥ 236

विमानरत्नमारुह्य ययौ दक्षगृहं शिवा ।
पुष्पवृष्टिरभूद्दिव्या तदा रम्या प्रतिक्षणम्

सपुष्पगन्धमन्दाश्च तदा गन्धवहा ववुः
तदा तूर्यध्वनिरभून्नानावीणास्वनान्वि

देवदुन्दुभयो नेदुर्जगुर्गन्धर्वनायकाः ।
ननृतुश्चोर्वशीमुख्या मङ्गलादर्शनोत्सुकाः ॥ 239

गानशास्त्रानुसारेण सञ्जगुर्नागकन्यकाः ।
लक्ष्मीमुख्या देवपत्न्यो दूराद्दृष्ट्वा शिवप्रियाम् ॥ 240

हृष्टाः सत्वरमुत्थाय प्रणेमुर्विनयान्विताः ।
शिवां सरस्वती नत्वा गृहीत्बा वेत्रमुत्तमम् ॥ 241

कृताञ्जलिपुटा भूत्वा तुष्टाव विविधैः स्तवैः ।
दृष्ट्वा दूरात्सुराश्चाम्वां ब्रह्मविष्णुपुरोगमाः ॥ 242

प्रणेमुर्दण्डवद्भूमौ मुनिवृन्दसमन्विताः ।
यक्षपन्नगगन्धर्वाः सिद्धविद्याधरादयः ॥ 243

प्रणेमुरम्बिकां दृष्ट्वा दूरादेव पुनः पुनः ।
अम्बिकादर्शनोद्युक्तदेवाद्यागमनात्तदा ॥ 244

भूयान्वभूव सम्मर्दो दुर्धर्षो गणपैरपि ।
सम्मर्दं विकलीकर्तुं वेत्रहस्तास्तदा गणाः ॥ 245

सकिरीटान्सुरान्सर्वांस्ताडयामासुरुद्धतान् ।
गतरत्नकिरीटाश्च विष्णुमुख्याः सुरास्तदा ॥ 246

प्रहृष्टवदनां देवीं तुष्टुवुर्विविधैः स्तवैः ।

देवा ऊचुः -

नमो देव्यै नमो देव्यै नमो देव्यै नमो नमः ।। 247

नमो नमो जगद्धर्त्र्यै जगद्धात्र्यै नमो नमः ।
नमो नमस्ते कल्याण्यै मङ्गलायै नमो नमः ।। 248

नमो मातर्नमो मातर्नमो मातर्नमो नमः ।
नमो मातर्नमो मातर्नमो मातर्नमो नमः ।। 249

नमो नमस्ते शर्वाण्यै सुखदायै नमो नमः ।
नमो नमस्ते भद्रायै शोभनायै नमो नमः ।। 250

नमो नमस्ते शुद्धायै शाम्भव्यै ते नमो नमः ।
नमस्ते परमेश्वर्यै परमायै नमो नमः ।। 251

नमस्ते भुक्तिदायिन्यै मुक्तिदायै नमो नमः ।
नमस्ते विश्वरूपिण्यै विश्वमात्रे नमो नसः ।। 252

नमस्ते लिङ्गरूपिण्यै भूतिदायै नमो नमः ।
नमः सन्तुष्टचित्तायै पुष्टिदायै नमो नमः ।। 253

नमो नमोऽन्नपूर्णायै सुवर्णायै नमो नमः ।
नमश्चन्द्रावतंसायै सर्वेश्वर्यै नमो नमः ।। 254

नमस्ते चन्द्रसूर्याग्निप्रतिमायै शिवप्रिये ।
नमस्ते भाग्यदायिन्यै भोगदायै नमो नमः ॥ 255

नमस्ते शान्तिदायिन्यै शमदायै नमो नमः ।
नमस्ते पुण्यरूपिण्यै पुण्यदायै नमो नमः ॥ 256

नमस्ते कीर्तिरूपिण्यै कीर्तिदायै नमो नमः ।
नमस्ते धर्मरूपिण्यै धर्मदायै नमो नमः ॥ 257

नमस्ते बुद्धिरूपिण्यै बुद्धिदायै नमो नमः ।
या त्वं विद्यास्वरूपेण विद्या मद्धृदये स्थिता ॥ 258

तस्यै शिवाङ्गभागिन्यै नमस्तुभ्यं नमो नमः ।
या त्वं कीर्तिस्वरूपेण कीर्तिमद्धृदये स्थिता ॥ 259

तस्यै शिवाङ्ग .... .... ।
या त्वं पुण्यस्वरूपेण पुण्यवद्धृदये स्थिता ॥ 260

तस्यै शिवाङ्ग .... .... ।
या त्वं धर्मस्वरूपेण धर्मवद्धृदये स्थिता ॥ 261

तस्यै शिवाङ्ग .... .... ।
या त्वं शान्तिस्वरूपेण शान्तिमद्धृदये स्थता ॥ 262

तस्यै शिवाङ्ग .... .... ।
या त्वं मदस्वरूपेण मदवद्धृदये स्थता ॥ 263

तस्यै शिवाङ्ग .... .... ।
या त्वं दयास्वरूपेण दयावद्धृदये स्थिता ॥ 264

तस्यै शिवाङ्ग .... .... ।
या त्वं ज्ञानस्वरूपेण ज्ञानिनां हृदये स्थिता ॥ 265

तस्यै शिवाङ्गभागिन्यै नमस्तुभ्यं नमो नमः ।
या त्वं पुष्टिस्वरूपेण पुष्टिमद्धृदये स्थिता ॥ 266

तस्यै शिवाङ्ग .... .... ।
या त्वं तुष्टिस्वरूपेण तुष्टिमद्धृदये स्थता ॥ 267

तस्यै शिवाङ्ग .... .... ।
या त्वं शुभस्वरूपेण शुभवद्धृदि संस्थिा ॥ 268

तस्यै शिाङ्गभागिन्यै .... .... ।
या त्वं योगस्वरूपेण योगिनां हृदये स्थिता ॥ 269

तस्यै शिवाङ्गभागिन्यै .... .... ।
या त्वं सिद्धिस्वरूपेणं सिद्धिमद्धृदि संस्थिता ॥ 270

तस्यै शिवाङ्ग .... .... ।
या त्वं कल्याणरूपेण भक्तकल्याणदायिनी ॥ 271

तस्यै शिवाङ्ग .... .... ।
या त्वं ध्यानस्वरूपेण भक्तानां ध्यानदायिनी ॥ 272

तस्यै शिवाङ्ग .... .... ।
यात्वमैश्वर्यरूपेण भक्तैश्वर्यप्रदायिनी ॥ 273

तस्यै शिवाङ्ग .... .... ।
या त्वं रक्षणरूपेण भक्तरक्षणदायिनी ॥ 274

तस्यै शिवाङ्गभागिन्यै नमस्तुभ्यं नमो नमः ।
या त्वमारोग्यरूपेण भक्तारोग्यप्रदायिनी ॥ 275

तस्यै शिवाङ्ग .... .... ।
या त्वं सुखस्वरूपेण भक्तनां सुखदायिनी ॥ 276

तस्यै शिवाङ्गभागिन्यै नमस्तुभ्यं नमो नमः ।
इति देवैः स्तुता देवी ब्रह्मविष्णुपुरोगमैः ॥ 277

विद्युल्लतेव विमला विवेशाध्वरमण्डपम् ।
तामागतां सुराराध्यां दक्षो दृष्ट्वापि शाङ्करीम् ॥ 278

अर्घ्यपाद्यादिभिः शीघ्रं नोपतस्थे भ्रमान्वितः ।
तदा तं तादृशं दक्षमुपविष्टं कुशासने ॥ 279

विलोक्याह मुनिश्रेष्ठो दधीचिः क्रोधसंयुतः ।

**दधीचिरुवाच -**

रे रे दक्ष दुराचारादक्षाचारपरायण ॥ 280

न करोषि कथं पूजां मङ्गलायै यथाविधि ।
इयमेव सुराराध्या सर्वयागफलप्रदा ॥ 281

इयमेवाद्य कल्याणी शङ्करार्धाङ्गभागिनी ।
इयमेवार्चिता नित्यं सर्वसौभाग्यदायिनी ॥ 282

इयमेवार्चिता नित्यं सर्वोपद्रवहारिणी ।
इयमेवार्चिता नित्यं सर्वमङ्गलदायिनी ॥ 283

इयमेवार्चिता नित्यं कीर्तिसम्पत्प्रदायिनी ।
इयमेवार्चिता नित्यं भुक्तिमुक्तिप्रदायिनी ॥ 284

इयमेव जगद्धात्री जगद्रक्षणकारिणी ।
इयमेव हि कल्पान्ते जगत्संहारकारिणी ॥ 285

इयमेव हि कल्याणी विष्णुमायाविलासिनी ।
इयमेवेन्द्रवह्न्यर्कब्रह्मादिजननी स्मृता ॥ 286

इयमेव तपोधर्मदानादिफलदायिनी ।
इयमेव हि वेदोक्तसर्वकर्मफलप्रदा ॥ 287

इयमेव स्तुता सर्वैर्वेदान्तैरखिलैरपि ।
इयमेव स्तुता सर्वैरितिहासादिभिः सदा ॥ 288

तप्यते हि तपः सिद्धैरेतद्दर्शनकाङ्क्षिभिः ।
पूज्यते योगिभिर्योगैरेतद्दर्शनकाङ्क्षिभिः ॥ 289

धर्माः क्रियन्ते मुनिभिरेतद्दर्शनकाङ्क्षिभिः ।
इज्यन्ते यज्वभिर्यागैरेतद्दर्शनकङ्क्षिभिः ॥ 290

अनन्तदानधर्माणां शाङ्करीदर्शनं फलम् ।
यागादीनां च धर्माणां शाङ्करीदर्शनं फलम् ॥ 291

इयमेव जगन्माता सर्वविद्यास्वरूपिणी ।
इयमेवादिविद्येयं सर्वमङ्गलरूपिणी ॥ 292

भवान्याः पूजनं दक्ष यतोऽद्य न कृतं त्वया ।
अत एवाध्वरस्यास्य विनाशोऽद्य भविष्यति ॥ 293

अमङ्गलं भवत्येव पूजार्हाणामपूजया ।
न केवलमियं पूज्या परं पूज्यतमा शिवा ॥ 294

सहस्रेणापि शिरसां शेषो यत्पादजं रजः ।
वहत्यन्वहभुग्नाङ्गः सेयं भगवती शिवा ॥ 295

इन्द्रोऽपि यत्प्रसादेन वृत्रं हत्वा महासुरम् ।
स्वर्गाधिपत्यं संप्राप सेयं भगवती शिवा ॥ 296

यत्पादपद्ममनिशं ध्यात्वा सम्पूज्य सादरम् ।
विष्णुर्विष्णुत्वमापन्नः सेयं भगवती शिवा ॥ 297

यत्पादपद्ममनिशं ध्यात्वा सम्पूज्य सादरम् ।
ब्रह्मा ब्रह्मत्वमापन्नः सेयं भगवती शिवा ॥ 298

यत्पादपद्ममनिशं ध्यात्वा सम्पूज्य सादरम् ।
ईशोऽपीशत्वमापन्नः सेयं भगवती शिवा ॥ 299

यत्पादपद्ममनिशं ध्यात्वा सम्पूज्य सादरम् ।
इन्द्रोऽपीन्द्रत्वमापन्नः सेयं भगवती शिवा ॥ 300

यत्पादपद्ममनिशं ध्यात्वा सम्पूज्य सादरम् ।
सूर्यः सूर्यत्वमापन्नः सेयं भगवती शिवा ॥ 301

यत्पादपद्ममनिशं ध्यात्वा सम्पूज्य सादरम् ।
चन्द्रश्चन्द्रत्वमापन्नः सेयं भगवती शिवा ॥ 302

यत्पादपद्ममनिशं ध्यात्वा सम्पूज्य सादरम् ।
वह्निर्वह्नित्वमापन्नः सेयं भगवती शिवा ॥ 303

यत्पादपद्ममनिशं ध्यात्वा सम्पूज्य सादरम् ।
वायुर्वायुत्वमापन्नः सेयं भगवती शिवा ॥ 304

यत्पादपद्ममनिशं ध्यात्वा सम्पूज्य सादरम् ।
यमो यमत्वमापन्नः सेयं भगवती शिवा ॥ 305

यत्पादपद्ममनिशं ध्यात्वा सम्पूज्य सादरम् ।
पाशी पाशित्वमापन्नः सेयं भगवती शिवा ॥ 306

महादेवोऽपि यां त्यक्त्वा क्षणमात्रमपि प्रभुः ।
न तिष्ठत्येव भगवान्सेयं भगवती शिवा ॥ 307

एतस्याः शोभनापाङ्गो यस्मिन्प्रसरति क्षणम् ।
स धन्यः स गुणी श्लाघ्यः सोऽमरो भाग्यवान्प्रभुः ।। 308

भवान्याः कुटिला दृष्टिर्यस्मिन्प्रसरति क्षणम् ।
स दुर्भगो स दुर्मेधा निर्गुणश्चापदां पदम् ।। 309

सेयं भगवती धन्या भवानी भाग्यदायिनी ।
यदि नाराध्यते भक्त्या कथं भाग्यं भविष्यति ।। 310

दौर्भाग्यं त्वयि सङ्क्रान्तं सङ्क्रान्ताश्चापदस्त्वयि ।
यतो नाराधिता भक्त्या भवानी सर्वमङ्गला ।। 311

कल्याणं तनुते येयं स्मृतापि शुभदा शिवा ।
सेयं कथं त्वया दक्ष भक्त्या नाराध्यते वद ।। 312

अनभ्यर्च्य तु कल्याणीं कल्याणं प्राप्नुयामिति ।
किमस्ति गर्वो दुर्वारः स गर्वोऽद्य विनश्यति ।। 313

दक्ष ते गर्वनिर्वाहः कमाश्रित्य भविष्यति ।
नास्ति कोऽप्यत्र देवस्त्वद्गर्वनिर्वहणक्षमः ।। 314

शर्वाणीविमुखो भूत्वा देवेष्वेतेषु कस्तव ।
करिष्यत्यद्य साहाय्यं तं न पश्यामि सर्वथा ।। 315

यदि देवाः करिष्यन्ति साहाय्यमधुना तव ।
तर्हि ते नाशमेष्यन्ति शलभा इव वह्निगाः ।। 316

शूलिशूलाग्रसम्भूतपावकेनामितौजसा ।
भविष्यत्यखिलं भस्मप्रायं नास्त्यत्र संशयः ॥ 317

सम्भावितं न कल्याणं भवानीविमुखस्य ते ।
सत्यमेतत्पुनः सत्यमुद्धृत्य भुजमुच्यते ॥ 318

ज्वलत्यद्य मुखं दक्ष यागध्वंसो भविष्यति ।
सहायास्तव यावन्तस्ते ज्वलन्त्वद्य सत्वरम् ॥ 319

अमराणां सदस्यानां शपथो मङ्गलापतेः ।
करिष्यत्यद्य साहाय्यं यद्यतस्य दुरात्मनः ॥ 320

निर्गच्छन्त्वमराः सर्वे क्षिप्रमध्वरमण्डपात् ।
अन्यथा भवतां नाशो भविष्यत्यद्य सर्वथा ॥ 321

निर्गच्छन्तु सगन्धर्वाः पन्नगा यागमण्डपात् ।
अन्यथा भवतां .... .... ॥ 322

यक्षाः सकिन्नराः शीघ्रं निर्यान्त्वध्वरमण्डपात् ।
अन्यथा भवतां ... .... ॥ 323

सिद्धाः सर्षिगणाः शीघ्रं निर्यान्त्वध्वरमण्डपात् ।
अन्यथा भवतां ... ... ॥ 324

ऋत्विजोऽप्यृषयः सर्वे निर्यान्त्व ... ... ।
अन्यथा भवतां ... ... ॥ 325

शैवं शपथमुल्लङ्घ्य दक्षस्यास्याध्वरे बलात् ।
यस्तिष्ठति स पापिष्ठो विनश्यत्वद्य सत्वरम् ॥ 326

इत्युक्त्वा क्रोधलोलाक्षो दधीचिर्मुनिपुङ्गवः ।
निर्ययौ सहसा तस्माद्यावदध्वरमण्डपात् ॥ 327

तावत्ते मुनयः शीघ्रं तीर्थपात्रकराः स्वयम् ।
निर्ययुः सहसा तस्मात्कोपात्ते यागमण्डपात् ॥ 328

विमानवरमारुह्य मङ्गलापि ततः परम् ।
चकार गन्तुमुद्योगं श्रीमत्कैलासमन्दिरम् ॥ 329

तदा प्राहुर्भगवतीं प्रमथा शूलपाणयः ।
कृताञ्जलिपुटा भूत्वा विनयानतकन्धराः ॥ 330

प्रमथा ऊचुः -

आज्ञां देहि सुराराध्ये दक्षनाशाय सत्वरम् ।
सोढुं न शक्यतेऽस्माभिरवज्ञा त्वयि तत्कृता ॥ 331

को वा वराको दक्षोऽयं गर्विष्ठः पापकर्मकृत् ।
एतत्सहायभूतानां का वा शङ्का वदन्तु ते ॥ 332

सत्वरं भस्मसात्कृत्वा दक्षमेनं ततः परम् ।
भवामः सुखिनो देवि नान्यथा सुखिनो वयम् ।
पीता यैः पूर्वमस्माभिः समुद्राः सप्त सत्वरम् ॥ 333

अस्माकं तादृशानां च किमशक्यं जगत्त्रये ।
नाशयामः क्षणादेव गर्विष्ठं दक्षमुद्धतम् ॥ 334

देहि देहि शिवे क्षिप्रमाज्ञां दक्षविनाशिकाम् ।
इत्युक्तं वचनं श्रुत्वा तानाश्वास्य ततः शिवा ॥ 335

विमानवरमारुह्य ययौ शङ्करसन्निधिम् ।
ततः समुत्थितः सद्यो दधीचिक्रोधपावकः ॥ 336

ज्वालामालासमाकीर्णो ददाहाध्वरमण्डपम् ।
तेनैव यागसम्भारा दग्धाः कोपाग्निना तदा ॥ 337

प्रपलाय्य गता देवा यक्षगन्धर्वसंयुताः ।
भस्मीभूतां यागशालां दृष्ट्वा दक्षः पुनः सुरान् ॥ 338

साहाय्यीकृत्य सहसा यज्ञशालामकारयत् ।
सम्पाद्य यज्ञसम्भारान् स कैश्चिन्मुनिभिः सह ॥ 339

यागं कर्तुं समारेभे बलवीर्यसमन्वितः ।
तदा दक्षं समालोक्य विष्णुर्ब्रह्मादिसंयुतः ॥ 340

नीतिशास्त्राविरोधेन प्राह वाचमुदारधीः ।

**विष्णुरुवाच -**

यागान्कर्तुमनायासं दक्ष दक्षोऽसि यद्यपि ॥ 341

तथापि मुनिशापो यः सोऽन्यथा न भविष्यति ।
दधीचिर्मुनिशार्दूलः श्रीमहारुद्रपूजकः ॥ 342

तस्य शक्तिर्न केनापि ज्ञायते दक्ष वस्तुतः ।
त्रैलोक्यदहने शक्तो दधीचिः क्रोधसङ्कुलः ॥ 343

दधीचिस्तादृशीं शक्तिं प्राप श्रीरुद्रपूजया ।
रुद्रमव्यभिचारेण येऽर्चयन्त्यन्वहं मुदा ॥ 344

ते सर्वेऽप्यतिदुर्धर्षा लभन्ते शक्तिमुत्तमाम् ।
अगस्त्येन पुरा पीताः समुद्राः सप्त लीलया ॥ 345

तदा लक्ष्मीसमेतेन मया तदुदरे स्थितम् ।
अगस्त्येन ततस्त्यक्तो निःसृतं च मया ततः ॥ 346

एतादृशं हि सामर्थ्यं तेन प्राप्तं शिवार्चनात् ।
ताडितोऽहं पुरा शूलैर्बहुधा शिवकिङ्करैः ॥ 347

अनिवार्यबला यस्मात्क्रूराः शङ्करकिङ्कराः ।
शाङ्कराणां प्रतिद्वन्द्वं नास्ति लोकेषु सर्वथा ॥ 348

तृणीकुर्वन्त्यस्मदादीनमराञ्छाङ्करा यतः ।
कुपिता न भवन्त्येव सहसा शाङ्करा ध्रुवम् ॥ 349

कुपिताश्चेत्तदा लोकांस्ते प्रधक्ष्यन्त्यसंशयम् ।
शक्तो दधीचिरचिराद्दग्धुमस्मान्स यद्यपि ॥ 350

तथापि कृपयाऽऽविष्टो ह्यदग्ध्वैव गतो मुनिः ।
धन्या हि शाङ्करा यस्मात्सदया अमिता अपि ॥ 351

किञ्च दत्तोऽस्ति शपथस्तेन विश्वपतेरिह ।
क्षणमप्यत्र न मया संस्थातुमुचितं ध्रुवम् ॥ 352

सर्वेश्वरस्य शपथः केनोल्लङ्घ्यो भविष्यति ।
तमुल्लङ्घ्य पुनः को वा क्षणं जीवितुमुत्सहेत् ॥ 353

आदावेव जगन्मातुस्त्वया नाभ्यर्चनं कृतम् ।
ततः परिणतं दुःखं तदिदं ते न संशयः ॥ 354

यदवज्ञां विधिः कृत्वा छिन्नमूर्धाऽभवत्पुरा ।
तत्कान्ताऽवज्ञया दक्ष तव नाशो भविष्यति ॥ 355

या शर्वाणी भगवती भक्तमङ्गलदायिनी ।
तदवज्ञाग्निना दक्ष तव नाशो भविष्यति ॥ 356

यामाहुः परमां विद्यां परब्रह्मस्वरूपिणीम् ।
तदवज्ञाग्निना दक्ष .... .... ॥ 357

यामाहुर्वेदजननीं निष्कलां निर्मलां तथा ।
तदवज्ञाग्निना दक्ष .... .... ॥ 358

यामाहुर्निर्गुणां नित्यामानन्दाममृतां शिवाम् ।
तदवज्ञाग्निना दक्ष .... .... ॥ 359

यामाहुः परमां शक्तिं स्वशक्त्या व्याप्तदिङ्मुखाम् ।
तदवज्ञाग्निना दक्ष .... .... ॥ 360

यामाहुरक्षरां शुद्धां वेदवेदान्तवेदिनः ।
तदवज्ञाग्निना दक्ष .... .... ॥ 361

यामाहुरीश्वरार्धाङ्गीमङ्गसङ्गविवर्जिताम् ।
तदवज्ञाग्निना दक्ष .... .... ॥ 362

यामाहुः सच्चिदानन्दऽस्वरूपामपराजिताम् ।
तदवज्ञानिना .... .... ॥ 363

यामाहुः कृतकल्याणीं कल्याणगुणसागराम् ।
तदवज्ञानिना .... .... ॥ 364

यामाहुर्योगफलदां तथा योगफलप्रदाम् ।
तदवज्ञानिना .... .... ॥ 365

यया ततमिदं विश्वं यस्यामन्ते प्रलीयते ।
तदवज्ञानिना .... .... ॥ 366

यतन्ते यत्प्रसादार्थं योगमार्गविचक्षणाः ।
तदवज्ञानिना .... .... ॥ 367

या शङ्करप्रिया साक्षात्सर्वमङ्गलरूपिणी ।
तदवज्ञानिना .... .... ॥ 368

ते एव दुर्भगा दुष्टास्त एवाभाग्यसंश्रयाः ।
तिरस्कुर्वन्ति ये मोहादम्बां भगवतीं शिवाम् ॥ 369

यद्दर्शनं विरक्तानां सिद्धानामपि दुर्लभम् ।
तां दृष्ट्वापि त्वया मोहात्कथं नाराधनं कृतम् ॥ 370

किं कर्तव्यं त्वया दक्ष दुरदृष्टं तवेदृशम् ।
तवापि नापराधोऽस्ति दुरदृष्टाश्रयो यतः ॥ 371

इत्युक्त्वाध्वरशालायां स्थितो विष्णुस्ततः परम् ।
भवनीपूर्ववृत्तान्तं ज्ञापयामास शम्भवे ॥ 372

शम्भुस्तद्वचनं श्रुत्वा शान्तोऽपि क्रोधसंयुतः ।
सद्यः सञ्जनयामास वीरभद्रं दुरासदम् ॥ 373

वीरभद्रः समुत्पन्नः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ 374

समुत्पन्नो वीरभद्रः प्रणम्य परमेश्वरम् ।
कृताञ्जलिपुटः प्राह वाक्यं वाक्यविशारदः ॥ 375

**वीरभद्र उवाच -**

महारुद्र महारौद्र सोमसूर्याग्निलोचन ।
किं कर्तव्यं मया कार्यं तद्वदस्व महेश्वर ॥ 376

शोषणीया: क्षणादेव किमीशानाद्य सिन्धवः ।
पेषणीया: किमीशान क्षणार्धेनैव पर्वताः ॥ 377

क्षणेन भस्मसात्कार्यं ब्रह्माण्डमुदरं हरे ।
क्षणेन भस्मसात्कार्याः सुरा वा किमुतेश्वर ॥ 378

व्यत्यासः सर्वलोकानां किमुकार्योऽस्ति शङ्कर ।
कर्तव्यं किमुतेशान सर्वप्राणिविनाशनं ॥ 379

ममाशक्यं न कुत्रापि त्वत्प्रसादान्महेश्वर ।
पराक्रमेण मत्तुल्यो न भूतो न भविष्यति ॥ 380

यत्रत्यकार्यमुद्दिश्य प्रेषयिष्यसि मां प्रभो ।
तत्तत्कार्यं साधयामि साधयाम्येव सत्वरम् ॥ 381

सर्वत्र गतिरीशान ममास्ति त्वत्प्रसादतः ।
नरास्तरन्ति संसारसागरं शङ्करस्मृतेः ॥ 382

लीलामात्रेण ते शम्भो कार्यं यद्यपि सिध्यति ।
तथाप्यहं प्रेषणीयो मय्येवानुग्रहो ह्ययम् ॥ 383

शक्तिरन्यादृशी शम्भो ममास्ति त्वदनुग्रहात् ।
प्रणतोऽस्मि महादेव भूयोऽपि प्रणतोऽस्म्यहम् ॥ 384

प्रेषयस्वेष्टसिध्यर्थं मामद्य हर सत्वरम् ।
स्पन्दो दक्षिणनेत्रस्याप्यधुना जायते मम ॥ 385

भविष्यत्यद्य विजयो मामतः प्रेषय प्रभो ।
ह्रंरोत्साहविशेषोऽपि जायते मम कश्चन ॥ 386

भविष्यत्यद्य विजयो मामतः प्रेषय प्रभो ।
शिवं त्वत्पादकमलसंसक्तामलचेतसः ॥ 387

भविष्यत्येव विजयो मामतः प्रेषय प्रभो ।
तस्यैव विजयो देव तस्यैव शुभमन्वहम् ॥ 388

यस्य भक्तिर्दृढा शम्भो त्वयि सर्वनियामके ।
इत्युंक्तं तद्वचः श्रुत्वा सन्तुष्टो मङ्गलापतिः ॥ 389

वीरभद्र जयी भूया इत्यवाचच्छिवोऽव्ययः ।

श्रीमहेश्वर उवाच -

यागं कर्तुं समुद्युक्तो दक्षो मद्विमुखोऽधुना ॥ 390

तमद्य भस्मजात्कृत्वा पुनरायांहि सत्वरम् ।
किञ्च तिष्ठन्ति मोहेन ये दक्षाध्वरमण्टपे ॥ 391

तानप्यद्यैव सहसा भस्मसात्कुरु सत्वरम् ।
सुरा भवन्तु गन्धर्वा यक्षा वा ये च केचन ॥ 392

तानप्यद्यैव सहसा भस्मसात्कुरु सत्वरम् ।
दधीचोक्तं समुल्लङ्घ्य शपथं चापि तत्र ये ॥ 393

तिष्ठन्ति ये च मोहेन दग्धव्यास्ते त्वया ध्रुवम् ।
तत्रास्तु विष्णुर्ब्रह्मा वा शचीनाथो यमोऽथवा ॥ 394

अविचार्यैव तान्सर्वान्पातयस्व प्रयत्नतः ।
प्रपलाय्य गमिष्यन्ति यदि विष्णवादयो भ्रमात् ॥ 395

तानाकार्षणशस्त्रेण ज्वालयानय सत्वरम् ।
ये तत्रोल्लङ्घ्य शपथं मदीयं गर्वतः स्थिताः ॥ 396

ते हि मद्द्रोहिणस्तस्माज्ज्वालयानलमालया ।
सपत्नीकान् स सम्भारान्दक्षयागस्थलस्थितान् ॥ 397

प्रज्वाल्य भस्मसात्कृत्वा पुनरायाहि सत्वरम् ।
तत्र त्वयि गते देवा विष्णवाद्या यदि सादरम् ॥ 398

स्तोष्यन्ति त्वां तदाप्याशु ज्वलय ज्वालयैव तान् ।
देवान्मयि कृतद्रोहाञ्ज्वालामालासमाकुलान् ॥ 399

ज्वालय ज्ज्वलनैः शीघ्रमाध्मायाध्माय पावकम् ।
विष्णवादीन्दक्ष यक्षादीन्सपत्नीकान्सबान्धवान् ॥ 400

प्रज्वाल्य वीर तदनु सलीलं सलिलं विब ।
इत्युक्तं श्रीमहेशस्य श्रुत्वावचनमादरात् ॥ 401

वीरभद्रोऽतिसन्तुष्टः प्रणनाम महेश्वरम् ।
प्रणतं शङ्करः प्राह वीरभद्र जयेति तम् ॥ 402

ततः प्रचलितः शीघ्रं वीरभद्रोऽद्रिराडिव ।
शङ्करः प्रेषयामास शोभार्थं कोटिशो गणान् ॥ 403

वीरभद्रस्य पुरतः पश्चादपि ययुर्गणाः ।
कल्पवृक्षसमुत्सृष्टा पुष्पवृष्टिरभूत्तदा ॥ 404

तष्टुवुश्च गणा वीरं शिपिविष्टेष्टचेष्टितम् ।
वीरभद्रे प्रचलिते दक्षनाशाय सत्वरम् ॥ 405

दक्षेण दुष्टचिह्नानि दृष्टानि विबुधैरपि ।
तस्य वामभुजस्पन्दो बहुधा समजायत ॥ 406

सुराणामपि सर्वेषां दुर्निमित्तमभूत्तदा ।
भूकम्पः समभूत्तत्र दक्षयागस्थले तदा ॥ 407

दक्षो ददर्श मध्याह्ने नक्षत्राणां गणानपि ।
दिशः कलुषिता जाताः कर्बुरोऽभूद्दिवाकरः ॥ 408

विचित्रपरिवेषेण सङ्क्रान्तश्चाभवद्रविः ।
नक्षत्राणि तदा पेतुर्विद्युतोऽग्निसमन्विताः ॥ 409

नक्षत्राणामभूद्वक्रा गतिश्चाधोमुखी तदा ।
गृध्रा दक्षशिरः स्पृष्ट्वा गताः शतसहस्रशः ॥ 410

गृध्रपक्षच्छाययासीत्सच्छायो यागमण्डपः ।
ववाशिरे तदा क्रूराः क्रोष्टारः कोटिसङ्ख्यया ॥ 411

उल्कावृष्टिरभूत्तत्र श्वेतवृश्चिकसम्युता ।
तदा सोष्णा ववुर्वाताः पांसुवृष्टिसमन्विताः ॥ 412

दुःखिताश्चाभवँल्लोकाः शस्त्रधाराहता इव ।
तदाननानि जातानि खिन्नानि द्युसदामपि ॥ 413

दक्षाद्या मूर्च्छिताः पेतुर्हाहेति प्रालपन्मुहुः ।
तरवस्तीरसञ्जाता नदीवेगाहता इव ॥ 414

पतिताश्चोत्थिताः सर्वे क्रूरसर्पहता इव ।
ततः सन्तापसन्तप्ता रुरुदुः कुररा इव ॥ 415

सवैकुण्ठास्ततः सर्वे तदा कुण्ठितशक्तयः ।
दुर्भगाभग्यसङ्क्रान्ताशिवपूजापराङ्मुखाः ॥ 416

धिग्जन्म तव दक्षेति ह्युत्थिता चाशरीरवाक् ।
तदानीमागतो भीमो वीरभद्रोऽरिमर्दनः ॥ 417

नृसिंह्गर्वनाशाय पुरारिः शरभो यथा ।
उपेन्द्रेन्द्रप्रभृतयो दक्षाद्याश्च ततः परम् ॥ 418

ददृशुर्वीरभद्रं तं ज्वलन्तमिव पर्वतम् ।
विलोक्यैनं वीरभद्रं दक्षमाह हरिस्तदा ॥ 419

**विष्णुरुवाच -**

अयं रुद्रगणश्रेष्ठो वीरभद्रोऽरिमर्दनः ।
रुद्रक्रोधाग्निसम्भूतः समायातोऽध्वराङ्गणे ॥ 420

अयमस्मद्विनाशार्थं प्रेषितोऽस्ति न संशयः ।
अशक्यमस्य नास्त्येव वीरभद्रस्य सर्वथा ॥ 421

प्रज्वाल्यास्मानयं सर्वानधुनैवाद्य सत्वरम् ।
ततः प्रशान्तहृदयो भविष्यति न संशयः ॥ 422

श्रीमहादेवशपथं समुल्लङ्घ्य भ्रमान्मया ।
यतः स्थितं ततः प्राप्तं दुःखं दुस्तरमद्य हि ॥ 423

शक्तिर्मम तु नास्त्येव दक्षाद्यैतन्निवारणे ।
शपथोल्लङ्घनादद्य शिवद्रोही यतोऽस्म्यहम् ॥ 424

कालत्रयेऽपि न यतो महेशद्रोहिणां सुखम् ।
ततोऽवश्यं मया प्राप्यं दुःखमद्य त्वया सह ॥ 425

सुदर्शनमहाचक्रं शक्तं नास्य निवारणे ।
शैवचक्रमिदं यस्मादशैवक्षयकारकम् ॥ 426

अकाण्डप्रलयो जातस्तव हेतोर्भयावहः ।
हा हा बलवतेदानीं नाशोऽस्माकमुपस्थितः ॥ 427

शरण्योऽस्माकमधुना नास्त्येव हि जगत्त्रये ।
शङ्करद्रोहिणां लोके कः शरण्यो भविष्यति ॥ 428

तनुनाशोऽपि सम्प्राप्यो ह्यस्माभिर्यमयातना ।
सा नैव शक्यते सोढुं बहुदुःखप्रदायिनी ॥ 429

शिवद्रोहिणमालोक्य दुष्टदूतो यमः स्वयम् ।
तप्ततैलकटाहेषु पातयिष्यत्यसंशयम् ॥ 430

मामिन्द्रं वा विधिं वान्यं शिवद्रोहपरं यमः ।
विलोक्य सहसा क्रूरः स कृपां न करिष्यति ॥ 431

पातयिष्यति घोरेषु वह्निकुण्डेषु सत्वरम् ।
आज्ञप्तोऽसौ महेशेन विष्णुर्ब्रह्माथ वासवः ॥ 432

मद्द्रोहपरचित्तश्चेत्तमग्नौ पातय द्रुतम् ।
अतोऽवश्यं यमः क्रूरः शिवद्रोहिजनानलः ॥ 433

अस्माननलकुण्डेषु स नूनं पातयिष्यति ।
यद्यत्र वीरभद्रोऽयमस्माञ्च्छूलेन सत्वरम् ॥ 434

प्रोथयिष्यति दक्षाद्य तदानीं यमयातना ।
सङ्गादुपेतं दुःखं नः शिवद्रोहपरस्य ते ॥ 435

असत्सङ्गः प्रयत्नेन परित्याज्यो हितैषिभिः ।
यद्यद्य क्रियतेऽस्माभिः पलायनमितस्ततः ॥ 436

अस्मदाकर्षकैः शस्त्रैः स समाकर्षयिष्यति ।
स्वर्गे वा भुवि पाताले यत्र कुत्रापि वा यतः ॥ 437

श्रीवीरभद्रशस्त्राणां गमनं न हि दुर्लभम् ।
गणा वसन्ति यावन्तः श्रीरुद्रस्य त्रिशूलिनः ॥ 438

तावतामपि सर्वेषां शक्तिरेतादृशी ध्रुवम् ।
श्रीकालभैरवः काश्यां नखाग्रेणैव लीलया ॥ 439

पुरा शिरांसि चिच्छेद चत्वारि ब्रह्मणोऽद्भुतम् ।
ये तादृशगणाः सन्ति कोटिशो मङ्गलापतेः ॥ 440

तेषामजेयं नास्त्येव त्रिषु लोकेषु वस्तुतः ।
एवमुक्त्वा स्थितो विष्णुरतिम्लानमुखाम्बुजः ॥ 441

वीरभद्रोऽपि संप्राप तदेवाध्वरमण्टपम् ।
वीरभद्रः शूलपाणिर्नानागणसमन्वितः ॥ 442

ददर्श विष्णुप्रमुखान्यागमण्टपसंस्थितान् ।
तान्दृष्ट्वा वीरभद्रोऽभूद्भ्रुकुटीकृतलोचनः ॥ 443

कृतान्त इव पापिष्ठान्मृगेन्द्र इव वारणान् ।
ततो विष्ण्वादयः सर्वे मूर्छापरवशा अपि ॥ 444

तं प्रणन्तुं समुद्युक्तास्तानाह स हरात्मजः ।

**वीरभद्र उवाच -**

रे रे हरे महादेवशपथोल्लङ्घन त्वया ॥ 445

कथमद्य कृतं दुष्ट गर्वः किमभवत्तव ।
तव श्रीरुद्रशपथोल्लङ्घने शक्तिरस्ति किम् ॥ 446

को वा त्वमसि को वा ते रक्षकोऽस्ति जगत्त्रये ।
वक्षो विदारयिष्यामि त्रिशूलेन हरे तव ।। 447

कस्तवास्ति समायातु रक्षकः स ममान्तिकम् ।
पातयिष्यामि भूपृष्ठे ज्वलयिष्यामि वह्निना ।। 448

दग्धं भवन्तमधुना पेषयिष्यामि सत्वरम् ।
रे रे हरे दुराचार त्वमेवं कर्तुमिच्छसि । 449

श्रीमहारुद्रमाहात्म्यं किं न जानासि तत्वतः ।
इत्युक्त्वा शूलमादाय वीरभद्रोऽरुणेक्षणः ।। 450

हरिं विदार्य भूपृष्ठे पातयामास सत्वरम् ।
ततो दक्षं समालोक्य कशाभिः कोटिशस्तदा ।। 451

सन्ताड्य पातयामास विदार्यास्त्रेण तत्तनुम् ।
ततो विधीन्द्रयक्षादीन्विदार्य पृथिवीतले ।। 452

पातयामास भूपृष्ठे क्रोधक्रान्तारुणेक्षणः ।
वीरभद्रस्स हत्वापि विष्णुब्रह्मपुरोगमान् ।। 453

नाभूच्छान्तोऽभवत्क्रोधः फणिराडिव मन्त्रितः ।
दिशो विलोकयामास कःकुत्रास्तीत्यनुक्षणम् ।। 454

वीरभद्रो हताराति: केसरीव वने द्विपान् ।
बभौ हत्वा हरीन्द्रादीन्सपत्नीकान्गणान्वितः ।। 455

त्रिपुरारिरिवाराध्यो हत्वा त्रिपुरकाननम् ।
रेजे तदा वीरभद्रस्त्रिशूलं भ्रामयन्करे ॥ 456

अनायासेन हत्वैतान्वीरभद्रस्ततोऽग्निना ।
ज्वलयामास विष्णवादीन्दीप्ताग्निः शलभानिव ॥ 457

वीरभद्रः क्षणादेव दग्ध्वा विष्णुपुरोगमान् ।
अट्टहासं ततश्चक्रे पूरयञ्जगतां त्रयम् ॥ 458

चञ्चरीकसमाक्रान्ता ततो नन्दनसम्भवा ।
पुष्पवृष्टिरभूद्भूमौ वीरभद्रगणच्युता ॥ 459

ववुर्गन्धवहाः शीताः समन्दाश्च सुगन्धिनः ।
देवदुन्दुभयो नेदुः स्वयमेव ततः परम् ॥ 460

दिशो बभूवुर्विमला भानुमानपि संबभौ ।
भूताः प्रशान्ताः सर्वेऽपि ततोऽभून्मङ्गलं भुवि ॥ 461

वीरभद्रः प्रचलितः कृतकार्यस्ततः परम् ।
विनाशितदृढध्वान्तो भानुमानिव सत्वरम् ॥ 462

उत्फुल्लपद्मपत्राक्षो वीरभद्रो गणान्वितः ।
ददर्श पार्वतीकान्तं ननाम च पुनः पुनः ॥ 463

कृतकार्यं वीरभद्रं दृष्ट्वा सन्तुष्टमानसः ।
वीरं वीरगणाध्यक्षं चकार परमेश्वरः ॥ 464

ततो हिमगिरिप्रान्ते शिवपूजापरायणान् ।
दृष्ट्वा स्वभक्तान्गौरीशस्तद्देशं प्राप लीलया ॥ 465

ततस्तत्पूजितः शम्भुः स्तुतश्च विविधैः स्तवैः ।
सन्तुष्टोऽभून्महादेवः सगणो मङ्गलान्वितः ॥ 466

ततः कस्मैचिदीशानो ददौ विष्णुत्वमादरात् ।
सृष्ट्वा लक्ष्मींस्तदा तस्मै ददौ लक्ष्मीगुणान्विताम् ॥ 467

ततः कस्मैचिदीशानो ब्रह्मत्वं च ददौ ततः ।
सृष्ट्वा सरस्वतीं तस्मै ददौ चाम्बा मनोहरा ॥ 468

ददावीशत्वमेकस्मै गौरी सृष्ट्वा ततः परम् ।
ददौ कस्मैचिदिन्द्रत्वं शचीं सृष्ट्वा ततः परम् ॥ 469

तस्मै शचीं ददौ तस्मै स्वर्गलोकं च शङ्करः ।
गन्धर्वादींस्ततः शम्भुर्यथापूर्वमकल्पयत् ॥ 470

ततः शिवान्वितो रेमे स्वतन्त्रः परमेश्वरः ।
अत एव यदा भ्रान्ता गणयन्ति न शङ्करम् ॥ 471

तदा नश्यन्ति विष्णवाद्या रुद्ररौद्रास्त्रवह्निना ।
कामः कृतशिवावज्ञः पपात नरके पुरा ॥ 472

अतोऽवज्ञां महदेवे न कुर्वन्ति हितैषिणः ।
मदनेन मुदा पूर्वमितरामरतुल्यताम् ॥ 473

विधाय शङ्करे मोहात्स्वनाशः परिकल्पितः ।
इन्द्रः पूर्वं समाहूय वरुणादीनुवाच ह ॥ 474

इन्द्र उवाच -

का शक्तिरस्ति भवतां वदन्त्विति च सादरम् ।
इति तद्वचनं श्रुत्वा स्वस्वशक्तिं यथार्थतः ॥ 475

सर्वे निवेदयामासुरिन्द्राय वरुणादयः ।
ततो मन्मथमालोक्य स्वसभामध्यवर्तिनम् ॥ 476

अपृच्छत्तव शक्तिः का ब्रूहि नोऽद्य यथार्थतः ।

मन्मथ उवाच -

शचीपते मदीयानामस्त्राणां कामगा गतिः ॥ 477

मच्छस्त्राणां गतिः क्वापि नैव प्रतिहता ध्रुवम् ।
मया मदीयशस्त्रेण मुनयोऽपि वशीकृताः ॥ 478

वशीकृता मयासिद्धा मदीयैः शस्त्रपञ्जरैः ।
कुसुमान्येव मेऽस्त्राणि मृदुलानि तथापि तैः ॥ 479

लोकत्रयजयं कर्तुं शक्तोऽहं लीलया हरे ।
प्रयुक्तानि मयास्त्राणि शिवान्येष्वखिलेष्वपि ॥ 480

न प्रयुक्तं मया शम्भौ शस्त्रमिन्द्र कदाचन ।
शङ्करेऽपि हि शक्तोऽस्मि प्रयोक्तुमितरेष्विव ॥ 481

इत्युक्तं तद्वचः श्रुत्वा शचीपतिरुवाच तम् ।
शृणु मद्वचनं काम सावधानं यदुच्यते ॥ 482

इन्द्र उवाच -

अवतीर्णोऽस्ति भूलोके प्रबलस्तारकासुरः ।
तेनाद्योपद्रुताः सर्वे सुरा मत्प्रमुखाः सदा ॥ 483

स भुङ्क्ते तारको नित्यं यज्ञभागान्यथेच्छया ।
अत्रागत्य स्वर्गलोके पीडामपि करोति सः ॥ 484

स मां न गणयत्येव विष्णुमप्यतिदुर्जनः ।
विधिमप्यमरानन्यानपि सर्वात्मना बली ॥ 485

स चकार पुरा युद्धं विष्णुना सह वीर्यवान् ।
युद्धे पराजितो विष्णुस्तेनैवामिततेजसा ॥ 486

तस्य हुङ्कृतिमात्रेण चूर्णितो भविताऽचलः ।
विदारिता भवत्येव पृथिवी च सकानना ॥ 487

तत्कोपश्वासमात्रेण महापर्वतसन्निभाः ।
कोटिशः प्रबलाः सद्यो भवन्त्यसुरपुङ्गवाः ॥ 488

तस्य संहारकः कोऽपि नास्त्यस्मासु सुरेष्वतः ।
अस्माभिः प्राप्यते दुःखं तत्कृतोद्योगसम्भवम् ॥ 489

विष्णुनाह्यात्मवीर्येण कार्यं तद्घटनं कथम् ।
श्रीरुद्रशक्तिकोट्यंशोऽप्युपेन्द्रो नियतस्ततः ॥ 490

तस्य निग्रहणे शक्तिर्नभविष्यति वस्तुतः ।
स्वतन्त्रः श्रीमहारुद्रस्तस्य रुद्रस्य वस्तुतः ॥ 491

कर्तव्यं नास्ति कुत्रापि नित्यानन्दो यतः प्रभुः ।
तदिच्छाऽस्मदद्दृष्टेन यदि संवलिता भवेत् ॥ 492

तदा करिष्यत्यस्माकं कार्यं स गिरिजापतिः ।
तथाच षण्मुखोत्पत्तिर्भविष्यति यथा तथा ॥ 493

प्रयत्नश्चिन्तनीयोऽस्ति सर्वथा सर्वसाधनैः ।
षण्मुखो रुद्रवीर्येण भविष्यति यदा तदा ॥ 494

स संहर्ता तारकस्य भविष्यत्येव सर्वथा ।
अयमर्थो मयाज्ञातो ध्यानेनाद्य मनोभव ॥ 495

विश्वासो मयि कर्तव्यो नान्यथा मद्वचो ध्रुवम् ।
शिवयोः सङ्गमेनैव शिववीर्यसमुद्भवः ॥ 496

भविष्यति महावीरः षण्मुखस्तारकाशनिः ।
तदर्थं शिवयोः सङ्गः शीघ्रमेव यथा भवेत् ॥ 497

तथा कार्यं त्वयानङ्ग सुराणां हितकाम्यया ।
ततस्तारकसंहर्ता सर्वलोकहितङ्करः ॥ 498

जनिष्यतेऽयुतार्काभस्तारकं च हनिष्यति ।
इति तद्वचनं श्रुत्वा मन्मथो मदमोहितः ॥ 499

प्राह प्रगल्भवचनं स्वविनाशैकहेतुकम् ।

**मन्मथ उवाच -**

मदीयपुष्पशस्त्राणि योगिनामपि मानसम् ॥ 500

यथा संमोहयेद्देव तथा शम्भुमपि ध्रुवम् ।
यथा मदीयशस्त्रेण मोहिता भवदादयः ॥ 501

तथा पिनाकपाणिश्च मोहमेष्यत्यसंशयम् ।
यद्यपि श्रीमहादेवः सर्वदेवोत्तमोत्तमः ॥ 502

मदस्त्रलक्ष्यभावे तु भवतां तुल्य एव सः ।
इति तद्वचनं श्रुत्वा तुष्टो वज्री सुमायुधम् ॥ 503

बाणप्रयोगं गौरीशे कुरुष्वेत्याह सत्वरम् ।
अथेन्द्रशासनं श्रुत्वा मन्मथः परमेश्वरे ॥ 504

बाणं प्रयोक्तुमुद्योगं चकार भ्रान्तमानसः ।
ततः संमागतः शीघ्रं ज्वालामालासमाकुलः ॥ 505

शिवफालाक्षिसम्भूतश्चित्रभानुर्भयङ्करः ।
कालानलाभ आगत्य ददाह कुसुमायुधम् ॥ 506

भस्मावशेषं कृत्वैव प्रशान्तस्तदनन्तरम् ।
स मन्मथस्ततो नीतस्तदैव यमकिङ्करैः ॥ 507

पातितश्चातिघोरेषु नरकेषु प्रयत्नतः ।
अतोऽनन्यसमं शम्भुमन्यतुल्यतया भ्रमात् ॥ 508

येऽभिजानन्ति दुर्वृत्तास्तेषामेतादृशी गतिः ।
सन्त्यज्य मोहमखिलमत एव भवानपि ॥ 509

सर्वदेवोत्तमत्वेन जानीहि गिरिजापतिम् ।
महादेवोऽखिलाराध्यः सर्वदेवशिखामणिः ॥ 510

न ततोऽस्त्यधिको विप्र न तत्तुल्योऽथवा ध्रुवम् ।
शिवे त्वयान्यतुल्यत्वमुक्तं मोहवशात्ततः ॥ 511

त्वया तदुक्तिमात्रेण पातकं महदार्जितम् ।
अतस्तत्पापशान्त्यर्थं श्रीशैलस्य प्रदक्षिणम् ॥ 512

सहस्रवारं यत्नेन कुरु मौनेन सादरम् ।
तत्प्रदक्षिणकालेषु रुद्रमावर्तयादरात् ॥ 513

रुद्राध्यायजपादेव यतो नश्यति पातकम् ।
उद्धूलनं त्रिपुण्ड्रं च तथा रुद्राक्षधारणम् ॥ 514

कुरु यत्नेन तन्नित्यं मनसापि न लङ्घय ।
तस्मादुद्धूलनादीनि श्रुत्युक्तानि ततो द्विज ॥ 515

तदुल्लङ्घनमात्रेण पातकं ते भविष्यति ।
यस्मादुद्धूलनादीनि द्विजैः कार्याणि सन्ततम् ॥ 516

तस्मात्त्वयापि यत्नेन तानि कार्याणि सन्ततम् ।
मा पिबोद्धूलनं त्यक्त्वा जलमल्पमपि द्विज ॥ 517

त्रिपुण्ड्रधारणं त्यक्त्वा मा पिबापस्तथा द्विज ।
अयं धर्मोपदेशस्तु यःकृतोऽस्ति मया द्विज ॥ 518

सोऽयं मोक्षप्रदः सत्यं सत्यं सत्यं न संशयः ।
शिवं देवोत्तमं मत्वा यजाद्यप्रभृति द्विज ॥ 519

शिवान्यसुरतुल्यं तं शिवं स्वप्नेऽपि मा वद ।
शिवान्यसुरतुल्यत्वं ये वदन्ति सदाशिवम् ॥ 520

न तैः सह भ्रमेणापि कुरु सम्भाषणं द्विज ।
देवोत्तमं महादेवं येऽन्यथा कथयन्ति ते ॥ 521

चण्डालयोनिसम्भूतो जन्मजन्मान्तरेऽपि च ।
देवोत्तमं महादेवं अन्यथा ये वदन्ति ते ॥ 522

भूयो भूयो भविष्यन्ति चण्डाला एव सर्वथा ।
अतः सन्तः सावधाने सन्ततं शान्तचेतसः ॥ 523

उमाकान्तं प्रयत्नेन भजन्ति भवभीरवः ।
संसारानलतप्तानामुमाकान्तार्चनामृतम् ।। 524

संसारतापं पापं च सद्य एव हरिष्यति ।
भगवन्तमुमाकान्तं सन्ततं संशितव्रताः ।। 525

सन्तः प्रशान्तमनसा पूजयन्ति स्तुवन्ति च ।
कृतान्तान्तकरं को वा न चिन्तयति सन्ततम् ।। 526

पूतस्वान्ते संवसन्तं नितान्तं श्रुतिसंस्तुतम् ।

स्कन्द उवाच -

इति शैववचः श्रुत्वा निर्धूताखिलकल्मषः ।। 527

सर्वोपनिषदां सारं श्रुत्वा तुष्टो बभूव सः ।
ततः स्वपापशान्त्यर्थं श्रीशैलस्य प्रदक्षिणम् ।। 528

कर्तुं सङ्कल्प्य विधिवत्तं नत्वा स ययौ मुदा ।
अतः सर्वोत्तमः साम्बो नन्दिकेश प्रयत्नतः ।। 529

नित्यमव्यभिचारेण पूज्यस्त्यक्त्वाऽन्यदैवतम् ।

भानुरुवाच -

इति स्कन्दवचः श्रुत्वा नन्दिकेशोऽतिहृष्टधीः ।। 530

शिवप्रेषितवृत्तान्तं वक्तुं समुपचक्रमे ।

**नन्दिकेश उवाच -**

स्कन्द योगरतं शम्भुस्त्वां दृष्ट्वा शैलवर्तिनम् ॥ 531

वृत्तान्तमपि विज्ञाय समायाहीति चाब्रवीत् ।
इति तद्वचनं श्रुत्वा स्कन्दः सन्तुष्टमानसः ॥ 532

दध्यौ महेश्वरं साम्बमानन्दाश्रूणि सन्त्यजन् ।
ततः प्राह तदा स्कन्दो नन्दिकेशं मुदावहम् ॥ 533

समागतं त्वया नन्दिन्केन मार्गेण तद्वद ।

**नन्दिकेश्वर उवाच -**

कैलासान्निर्गतः काशीं सम्प्राप्तोऽस्मि शिवप्रियाम् ॥ 534

यस्यां त्यक्त्वा तनुं मर्त्यः प्राप्नोति शिवमव्ययम् ।
यस्यां स्थितो नरोऽल्पोऽमि सुरैः सम्पूज्यते सदा ॥ 535

सा काशी मुक्तिदा भाग्यान्नयनैरतिथीकृता ।
यस्यां तीर्थं महत्पुण्यं मणिकर्ण्यभिधं शुभम् ॥ 536

सा काशी .... .... ।
यस्यां काश्यां महादेवः क्रीडत्यम्बासमन्वितः ॥ 537

सा काशी .... .... ।
यस्यां वैश्वेश्वरं लिङ्गं मुक्तिलिङ्गं प्रकीर्तितम् ॥ 538

सा काशी .... .... ।
यस्याम्म्बा मोक्षभिक्षां प्रयच्छति शिवप्रिया ॥ 539

सा काशी .... .... ।
यस्यां समस्तदेवानां शास्ता श्रीकालभैरवः ॥ 540

सा काशी .... .... ।

भानुरुवाच -

इति तद्वचनं श्रुत्वा षण्मुखोऽत्यन्तहृष्टधीः ॥ 541

शिवं द्रष्टुं समुद्युक्तः काशीं प्राप शिवात्मिकाम् ।
स प्राप्यानन्ददां काशीं स्कन्दः सन्तुष्टमानसः ॥ 542

मणिकर्णीजले स्नात्वा ययौ विश्वेशमन्दिरम् ।
ततः स्नात्वा ज्ञानवाप्यामुद्धूल्य च समाहितः ॥ 543

ज्ञानेशादीन्समभ्यर्च्य मुक्तिमण्टपमाश्रितः ।
ततो ददर्श विश्वेशं सर्वदेवोत्तमोत्तमम् ॥ 544

दृष्ट्वा समर्चयामास पूजाद्रव्यैरनेकधा ।
ततस्तुष्टाव रुद्रेण रुद्रसूक्तैस्तथेश्वरम् ॥ 545

ततः प्रसन्नो विश्वेशस्तमुवाचाथ हृष्टधीः ।

**ईश्वर उवाच -**

अत्र मत्पूजनासक्तो नित्यं मां वीक्ष्य यो मुदा ॥ 546

संवसेत न गन्तव्यं स्कन्द कुत्रापि सर्वथा ।
कृत्वा तदर्चनं पूर्वं मत्पुरः स्थितमास्तिकाः ॥ 547

ततो मामर्चयिष्यान्ति स्कन्दातः संवसादरात् ।
इति दत्वा वरं तस्मै नन्दिकेशं स्वपूजकम् ॥ 548

त्वमप्यत्रैव सततं वसस्वेत्याह शङ्करः ।
इतीशोक्तो नन्दिकेशस्तस्थौ विश्वेश्वराग्रतः ॥ 549

स्कन्दोऽपीशपुरः स्तस्थौ समक्षं शङ्कराग्रतः ।
पूजयित्वा स्थितः शम्भुं सर्वदेवोत्तमं प्रभुम् ॥ 550

शिवपूजाप्रभावेण काशीं संप्राप्य षण्मुखः ।
अतो भवन्तो मुनयः पूजयध्वं महेश्वरम् ॥ 551

स सर्वदेवदेवेशश्चतुर्वर्गफलप्रदः ॥

**श्रीशिव उवाच -**

इति भानुवचः श्रुत्वा श्रीशैलं मुनयो ययुः ।
तपसा तत्र मां नित्यं पूजयामासुरन्वहम् ॥ 552

मय्येवार्पितकर्मणामनुदिनं मय्येव सक्तात्मनां
मत्पूजापरचेतसां नियमतो मद्ध्यानपूतात्मनाम् ।
सौभाग्यं सुखमक्षयं च सततं दास्येऽपवर्गं ततः
सत्यं सत्यमिदं गिरीन्द्रतनये सत्यं पुनः शोभने ॥ 553

॥ इति श्रीशिवरहस्ये सप्तमांशे श्रीशैलमाहात्म्ये
शिवगौरीसंवादो नाम
चतुर्दशोऽध्यायः ॥



## ॥ पञ्चदशोऽध्यायः ॥

पार्वत्युवाच -

महेश देवदेवेश तव पूजनमन्वहम् ।
कथं कार्यं साधनानि कानि शम्भो तवार्चने ॥ 1

श्रीशिव उवाच -

नन्दिकेशः पुरा देवि मामभ्यर्च्य प्रयत्नतः ।
पूजाविधानं पप्रच्छ ममैव परमात्मनः ॥ 2

गौरीवल्लभ देवेश सर्वज्ञ करुणानिधे ।
शिवपूजाविधानं मे निरूपय कृपानिधे ॥ 3

शिवस्य पूजनात्पूर्वं किं कर्तव्यं प्रयत्नतः ।
शिवपूजाविधानानि कानि पापहराणि च ॥ 4

कीदृशः शिवपूजायामधिकारी महेश्वर ।
कीदृशेन कृता पूजा तव प्रियकरा विभो ॥ 5

कथं ध्येयोऽसि भगवन्पूजनीयः कथं भवान् ।
कथं वा पूजितो मोक्षं प्रयच्छसि सदाशिव ॥ 6

**सदाशिव उवाच -**

साधु साधु गणश्रेष्ठ प्रश्नोऽयं शुभदस्तव ।
वक्ष्ये पूजाविधिं सम्यक् श्रृणु सर्वार्थसाधनम् ॥ 7

मदृयं विधाय यां पूजां मद्भक्तो मत्परायणः ।
मुच्यते सर्वपापेभ्यः सेयं पूजा मयोच्यते ॥ 8

पूज्योऽहमेव देवेभ्यः सर्वेभ्यो देवपुङ्गवः ।
सर्वोत्कर्षेण पूज्योऽहं सर्वेभ्योऽप्युत्तमोत्तमः ॥ 9

देवाधिदेवं विश्वेशं महादेवं जगत्प्रभुम् ।
सर्वोत्कर्षेण सम्पूज्य मुच्यते सर्वकिल्बिषैः ॥ 10

सर्वदेवाधिदेवं मामनन्यसदृशं शिवम् ।
योऽन्यतुल्यतया वेत्ति स एव श्वपचाधमः ॥ 11

विश्वाधिकं प्रभुं रुद्रं योऽन्यतुल्यं वदिष्यति ।
स जारज इति ज्ञेयस्सन्ततिस्तस्य जारजा ॥ 12

ईशानं सर्वविद्यानां यो मामन्यसमं वदेत् ।
स मद्यपवरो ज्ञेयः सत्यं सत्यं न संशयः ॥ 13

ईश्वरं सर्वभूतानां यो मामन्यसमं वदेत् ।
स ब्रह्महेति विज्ञेयो न तेन सह संवदेत् ॥ 14

उमापतिं महादेवं यो मामन्यसमं वदेत् ।
स गोसहस्रहा नित्यं न तेन सह संवदेत् ॥ 15

श्रीनीलकण्ठं विश्वेशं यो मामन्यसमं वदेत् ।
स चण्डाल इति ज्ञेयः सत्यं सत्यं न संशयः ॥ 16

यस्तु मां शिवमाराध्यमनाराध्यैव संवसेत् ।
स ब्रह्महेति विज्ञेयः सर्वदा सर्वदेहिभिः ॥ 17

यस्तु मां .... .... ।
स नित्यं स्वर्णहारीति विज्ञेयः सर्वदेहिभिः ॥ 18

यस्तु मां .... .... ।
स गुरुस्त्रीरतो ज्ञेयः सर्वदा .... ॥ 19

यस्तु मां .... .... ।
स मद्यप इति ज्ञेयः सर्वदा .... ॥ 20

यस्तु मां .... .... ।
तत्संसर्गीति विज्ञेयः .... ॥ 21

यो नित्यं शिवपूजायां निरतः शिवतत्परः ।
स विष्णुमुख्यैरमरैः पूजनीयो न संशयः ॥ 22

शिवपूजापरं दृष्ट्वा देवा विष्णुपुरोगमाः ।
पूजनीयं प्रस्तुवन्ति प्रणमन्ति मुहुर्मुहुः ॥ 23

अयं धन्यतमो मर्त्यः शिवपूजापरायणः ।
भाग्यवानिति सर्वेऽपि मन्यन्ते त्रिदशाः सदा ॥ 24

यद्देहापगमे मोक्षो यस्य तस्यैव देहिनः ।
महादेवस्य पूजायां मतिर्भवति नान्यथा ॥ 25

सर्वोत्कर्षं शिवं मत्वा मामर्चयति यो नरः ।
तस्मै दास्यामि कैवल्यं नान्यस्मै सत्यमुच्यते ॥ 26

यस्यासाधारणी भक्तिर्मयि सर्वोत्तमे शिवे ।
स एव मुक्तिकान्तायाः कान्तो भवति नेतरः ॥ 27

सर्वदेवाधिदेवं मां शिवं योऽभ्यर्चयिष्यति ।
स देवोरगगन्धर्वयक्षपूज्यो भविष्यति ॥ 28

यो मत्पूजापरो मर्त्यस्तद्द्वारि सकलाः सुराः ।
कृताञ्जलिपुटा नित्यं स्थास्यन्त्येव न संशयः ॥ 29

अनन्यशरणो यस्तु शिवपूजापरायणः ।
न तस्य सम्पदो दूरे सत्यं सत्यं न संशयः ॥ 30

तस्यैश्वर्यं तस्य विद्या यस्य भक्तिः सदाशिवे ।
तस्यैव मुक्तिरप्यन्ते सत्यं सत्यं न संशयः ॥ 31

यस्य नास्ति गृहे नित्यं शिवलिङ्गार्चनं शिवे ।
तत्सत्यं कर्मचण्डालगृहमेव न संशयः ॥ 32

शिवलिङ्गं न यस्यास्ति गृहे बिल्वादिपूजनम् ।
तद्गृहे जलमन्नं वा न ग्राह्यं सर्वथा द्विजैः ॥ 33

शिवलिङ्गार्चने यस्य नास्त्यसाधारणी गतिः ।
तेभ्यो लिङ्गानर्चकेभ्यः शिवलिङ्गार्चनप्रियः ॥ 34

चण्डालोऽपि वरः सत्यं न शिवानर्चको द्विजः ।
शिवलिङ्गार्चनं नित्यं यस्त्यजेदविवेकतः ॥ 35

स याति नरकं घोरं यावदाचन्द्रतारकम् ।
शिवलिङ्गं समभ्यर्च्य यः पश्यति शिवं मुदा ॥ 36

स एव सर्वभाग्यानामालयो भवति ध्रुवम् ।
शिवे किं वहुना यस्तु श्रद्धया शिवमर्चयेत् ॥ 37

न तस्य नरकावासः स मे भक्तः स मे प्रियः ।
एकमेव महादेवं भक्त्या योऽभ्यर्चयिष्यति ॥ 38

स शाङ्कर इति ज्ञेयः स एव मम सम्मतः ।
एकोऽहं पूजितो नित्यं दास्यामि परमां गतिम् ॥ 39

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
अनन्यशरणो यस्तु सर्वधर्मान्विहाय माम् ॥ 40

अर्चयिष्यति पुण्यात्मा स एव मम सम्मतः ।
यः शङ्करैकशरणो यः शिवैकार्चनप्रियः ॥ 41

स एव सर्वधर्माणामाश्रयो भवति ध्रुवम् ।
धर्मार्थकाममोक्षार्थं मामभ्यर्च्य सदाशिवम् ॥ 42

धर्मार्थकाममोक्षाणामाश्रयो भवति ध्रुवम् ।
ऐहिकाऽऽमुष्मिकं वापि यो मत्तः काङ्क्षते फलम् ॥ 43

स मामभ्यर्च्य विश्वेशं समवाप्नोति तत्फलम् ।
मामभ्यर्च्य महादेवं स्वशक्त्या मन्मनाः सदा ॥ 44

कदाचिदपि दुःखानि न प्राप्नोत्येव मानवः ।
यो मदर्पितसत्कर्मा मदाराधनतत्परः ॥ 45

स मद्भक्तस्ततस्तेन कृता पूजा मम प्रिया ।
परमेश्वरमाराध्य सर्वैश्वर्यपतिं शिवम् ॥ 46

अनाराध्यैकमप्यर्थं नैव प्राप्नोति मानवः ।
धनवानेव धनदो न दरिद्रो धनप्रदः ।। 47

ततोऽहमेव धनवान्पूजनीयो धनार्थिभिः ।
ब्रह्मोपेन्द्रेन्द्रचन्द्राद्यैरशेषैरमरैरपि ।। 48

पूजनीयोऽत एवाहं पूजनीयो नरैरपि ।
ब्रह्मोपेन्द्रप्रभृतयो देवाः सर्वे मुनीश्वराः ।। 49

मामर्चयन्ति मामेव शरणं प्राप्नुवन्ति च ।
सर्वेभ्य एव देवेभ्यो यतोऽस्मि सुमहानहम् ।। 50

तत एव महादेवं वदन्ति निगमाश्च माम् ।
न मत्तोऽभ्यधिको देवः सर्वेभ्योऽपि महानहम् ।। 51

अत एव महादेवः प्रथितो निगमेष्वहम् ।
यं यमुद्दिश्य कर्माणि करिष्यन्ति फलेप्सवः ।। 52

तानि कर्माणि मय्येव प्रविशन्ति फलप्रदे ।
फलप्रदाता भगवान्कर्मणामहमेव हि ।। 53

तस्मान्मदन्यफलदः कर्मणां नास्ति सर्वथा ।
यं यं यं देवमुद्दिश्य नमस्काराः कृता नरैः ।। 54

ते सर्वेऽपि नमस्काराः प्रविशन्ति च मां प्रिये ।
यं यं देवं समुद्दिश्य या या पूजा कृता मुदा ।। 55

सा मयि प्रविशत्येव पूजा सर्वापि सर्वथा ।
राज्ञे साक्षाद्धनं दातुमशक्तो मनुजः सदा ।। 56

अधिकारिमुखादेव प्रवेशयति भूपतिम् ।
साक्षान्मत्पूजने यस्तु समर्थस्तेन सर्वदा ।। 57

ममैव पूजा कर्तव्या नान्यदेवस्य सर्वदा ।
द्रव्यदाने समर्थो यस्साक्षाद्राज्ञे नरस्तथा ।। 58

राज्ञे द्रव्यं ददात्येव साक्षान्मानपुरःसरम् ।
अतः साक्षाद्धनं दत्तं येन राज्ञे मनीषिणा ।। 59

तेन राजप्रसादोऽपि प्राप्यते सर्वसौख्यदः ।
यं साक्षाद्वेत्ति राजानं यस्तु राजप्रसादतः ।। 60

स राजान्यान्प्रधानांस्तु नाराधयति सर्वथा ।
एवमेव मदर्चायामधिकादरवान्नरः ।। 61

मदन्यं नार्चयेदेव मदन्यः फलदो न हि ।
किमन्याराधनेनापि मदन्योऽभीष्टदस्तु कः ।। 62

ततोऽहमेक एवार्यैः पूजनीयः प्रयत्नतः ।
शिवान्यः फलदोऽस्तीति प्रवदन्त्यशिवास्तु ये ।। 63

तादृशानशिवान्स्पृष्ट्वा सचेलः स्नानमाचरेत् ।
मदन्यः कर्मफलदः कथं भवितुमर्हति ।। 64

पुरा तु विष्णुमुद्दिश्य तपस्तेपे जलाकरः ।
विष्णुपूजापरो नित्यं सालग्रामशिलास्थले: ।। 65

तद्घोरतपसा क्षुब्धं सर्वं भूमण्डलं बहु ।
फणिदिक्करिमुख्याश्च क्षुब्धाः सर्वे भयाकुलाः ।। 66

देवाश्चेन्द्रादयः सर्वे क्षुब्धं प्रेक्ष्य महीतलम् ।
क्षुब्धा बभूवुः कर्तव्याकर्तव्यज्ञानविह्वलाः ।। 67

ततश्चेन्द्रादयो देवा ब्रह्माणं शरणं ययुः ।
परिम्लानमुखाः सर्वे कृताञ्जलिपुटाः शिवे ।। 68

देवान्दृष्ट्वा स देवेन्द्रप्रमुखांश्चतुराननः ।
जगाद वचनं चारु सुरदुःखापनोदकम् ।। 69

ब्रह्मोवाच -

किं भो देवा भयग्रस्ताः किं वा तद्भयकारणम् ।
किमीदृशं भयं येन बहुदुःखमवाप्यते ।। 70

कुर्वन्तु देवदेवस्य महादेवस्य शूलिनः ।
स्मरणं पूजनं भक्त्या भयनिर्णोदनाय वः ।। 71

शङ्करार्चनशीलानां शिवैकरतचेतसाम् ।
भयलेशोऽपि नास्त्येव भयदोऽपि स भीतिहा ।। 72

गौरीकान्तो यदा चित्ते शङ्करः परिवर्तते ।
तदा भयानि यान्त्येव दूरतः शिवशासनात् ॥ 73

लाभः प्रतिपदं तेषां तेषां प्रतिपदं जयः ।
येषां चेतसि कुन्देदुधवलः पार्वतीपतिः ॥ 74

तेषां पुत्राश्च पौत्राश्च वेदशास्त्रविशारदाः ।
येषां चेतसि कुन्देन्दुधवलः पार्वतीपतिः ॥ 75

तेषामारोग्यमैश्वर्यं तेषामौदार्यमुत्कटम् ।
येषां चेतसि .... .... ॥ 76

सम्पदोऽनुदिनं तेषां तेषां कल्याणमन्वहम् ।
येषां चेतसि .... .... ॥ 77

तेषां भाग्यानि पुण्यानि तेषां श्रेयांसि चान्वहम् ।
येषां चेतसि .... .... ॥ 78

तेषां द्वारि मदोन्मत्तमातङ्गोत्तमकोटयः ।
येषां चेतसि .... .... ॥ 79

तेषां गृहेषु कुण्डोध्न्यो गावः क्षीरामृताशयाः ।
येषां चेतसि .... .... ॥ 80

तेषां करस्थितः स्वर्गो नानायज्ञफलः शिवे ।
येषां चेतसि .... .... ॥ 81

तेषां हस्तगतो मोक्षः पुनरावृत्तिवर्जितः ।
येषां चेतसि .... .... ॥ 82

भाग्यं शङ्करभक्तानाममेयममलं ध्रुवम् ।
येषां वयमपीन्द्राद्याः सेवका नात्र संशयः ॥ 83

धन्याः शङ्करपादाब्जध्यानमात्रपरा नराः ।
येषां वयमपीन्द्राद्याः .... .... ॥ 84

धन्यास्ते शिवलिङ्गार्चासक्तान्तःकरणा नराः ।
येषां वयमपीन्द्राद्याः .... .... ॥ 85

धन्यास्ते शिवपूजार्थमुपात्तद्रविणा नराः ।
येषां वयमपीन्द्राद्याः .... .... ॥ 86

धन्यास्ते मन्त्रपूताश्च भस्मफाला नरोत्तमाः ।
येषां वयमपीन्द्राद्याः .... .... ॥ 87

धन्यास्ते कण्ठसंसक्तरुद्राक्षाभरणा नराः ।
येषां वयमपीन्द्राद्याः .... .... ॥ 88

धन्यास्ते शिवनामैकजीवनाः शिवपूजकाः ।
येषां वयमपीन्द्राद्याः .... .... ॥ 89

धन्यास्ते शिवनामाङ्ककथाश्रवणतत्पराः ।
येषां वयमपीन्द्राद्याः .... .... ॥ 90

धन्यास्ते शिवनामाङ्कगानासक्तात्मचेतसः ।
येषां वयमपीन्द्राद्याः .... .... ॥ 91

धन्यास्ते शिवभक्तेभ्यो दत्तवित्ता नरोत्तमाः ।
येषां वयमपीन्द्राद्याः .... .... ॥ 92

न भयं शिवभक्तानामभयप्रदमीश्वरम् ।
यतोऽर्चयन्ति सततमप्रमत्ताः शिवार्चका ॥ 93

उदेतु भानुरप्येष पश्चिमायां दिशीश्वरि ।
तथापि शिवभक्तानां भयलेशोऽपि नो भवेत् ॥ 94

भवन्तु सागराः सर्व उद्वेलाः क्षोभहेतवः :
तथापि शिवभक्तानां .... .... ॥ 95

कम्पमेत्वनिशं भूमिः सशैलवनकानना ।
तथापि शिवभक्तानां .... .... ॥ 96

अमायामुदयं यातु चन्द्रः सर्वकलायुतः ।
तथापि शिवभक्तानां .... .... ॥ 97

प्रकाशन्तां तु नक्षत्रा अपि नित्यमहर्निशम् ।
तथापि शिवभक्तानां .... .... ॥ 98

धूसराः सन्तु सर्वास्ता दिशः प्रतिदिशस्तथा ।
तथापि शिवभक्तानां .... .... ॥ 99

पतन्त्वशनिसङ्घाश्च बहवः सततं भुवि ।
तथापि शिवभक्तानां ... ... ॥ 100

देवाः किं बहुनोक्तेन सर्वथा शाङ्करैर्जनैः ।
पदे पदेऽपि कल्याणं प्राप्तव्यं नात्र संशयः ॥ 101

शङ्करासक्तचित्तानां शङ्करः करुणाकरः ।
ददाति मङ्गलं नित्यं मङ्गलापतिरीश्वरः ॥ 102

ध्यातो ददाति गौरीशः मङ्गलं मङ्गलाश्रयः ।
मङ्गलापतिसंसक्तचित्तानां नास्त्यमङ्गलम् ॥ 103

अत एव मुनिश्रेष्ठाः शिवतत्वविशारदाः ।
अनेकजन्मभिर्येन तप्तं घोरतरं तपः ॥ 104

तेनैव शङ्करे भक्तिः क्रियतेऽनन्यचेतसा ।
अनन्यभाङ्महादेवं योऽर्चयिष्यति सर्वदा ॥ 105

स एव धन्यः पुण्यात्मा तस्याप्राप्यं न किञ्चन ।
जयेति शङ्करादन्यं केचिन्मायाविमोहिताः ॥ 106

वदन्ति तेषां भद्राणि नैव कल्पशतैरपि ।
अप्रमेयमनाद्यन्तं नित्यं शङ्करमीश्वरम् ॥ 107

अनाराध्य जडाः केचिदर्चयन्त्यन्यदैवतम् ।
ईश्वरत्वेन सम्भाव्यानीश्वरं ये भजन्ति ते ॥ 108

स्वेष्टं न प्राप्नुवन्त्येव लभन्तेऽनिष्टमप्यहो ।
शिव एव शिवप्राप्त्यै ध्येयो नित्यं मनीषिभिः । 109

ईश्वरः सर्वभूतानां शिवो हि श्रुतिभिः श्रुतः ।
अतः सर्वात्मना नित्यं भजनीयो महेश्वरः ।। 110

यः शङ्करं विहायान्यं सुरमर्चयितुं यतेत् ।
सम्मुखस्थां सुधां त्यक्त्वाक्षारांम्भः पातुमिच्छति ।। 111

यस्यास्त्यनन्यगा भक्तिर्महादेवे महेश्वरे ।
स एव कृतकृत्यश्च स एव सुभगोत्तमः ।। 112

यस्यास्त्यनन्यगा भक्तिर्महादेवे सुरोत्तमे ।
तस्य तज्जन्मविगमे मुक्तिरेव न संशयः ।। 113

शिवे परमकल्याणनिदाने परमेश्वरे ।
धन्या एव हि कुर्वन्ति भक्तिं मुक्तिप्रदायिनीम् ।। 114

यं यं सदाशिवो नित्यमनुगृह्णाति वै सुराः ।
तस्यैव शङ्करे श्रद्धा भक्तिश्चापि भवेद् ध्रुवम् ।। 115

यः शङ्करं समालोक्य नाभिनन्दति सत्वरम् ।
स दग्धचित्तो मोहेन ज्ञेयः पापकुलाश्रयः ।। 116

पूजितः प्रणतः स्पृष्टश्चिन्तितः संस्तुतः शिवः ।
ददाति सौख्यमतुलं मुक्तिमप्यमरोत्तमः ।। 117

स भाग्यवान्स पुण्यात्मा स धन्यो धन्यपूजितः ।
तस्यैव पितरौ धन्यौ तस्यैव कुलमुत्तमम् ॥ 118

येन साम्बो महादेवः पूज्यते सर्वदा मुदा ।
सर्वोत्तमं महादेवं विदित्वा योऽर्चयिष्यति ॥ 119

नमस्तस्मै नमस्तस्मै नमस्तस्मै नमो नमः ।
सर्वोत्तमं महादेवं विदित्वा योऽभिनन्दति ॥ 120

नमस्तस्मै ... ... ... ।
अनन्यशरणाः सन्तः सक्तान्तःकरणाः शिवे । 121

सर्वैरपि नमस्कार्याः शिवभक्तिरतैः सदा ।
शाङ्करः शङ्करः साक्षात्तयोर्भेदो न वस्तुतः ॥ 122

नमस्तस्मै नमस्तस्मै नमस्तस्मै नमो नमः ।
शङ्करार्चारतं शैवं दृष्ट्वा यो नाभिनन्दति ॥ 123

न तस्मादधिकः पापी सत्यं सत्यं न संशयः ।
शाङ्करस्तोषितो येन वित्तसंतोषितः शिवः ॥ 124

कर्मणा मनसा वाचा शङ्करार्चापरायणाः ।
अतीव दुर्लभा लोके भविष्यन्ति न संशयः ॥ 125

अन्यदेवपरा दुष्टाः शङ्करध्यानवर्जिताः ।
नष्टधर्माः दुराचारा भविष्यन्ति न संशयः ॥ 126

सर्वदेवोत्तमं साम्बं महादेवमनामयम् ।
अन्यदेवसमं मत्वा विनङ्क्ष्यन्ति कलौ युगे ॥ 127

अनाराध्य महादेवं प्रातर्नियमपूर्वकम् ।
जलपानरता मर्त्या भविष्यन्ति कलौ युगे ॥ 128

रुद्राक्षधारणं त्यक्त्वा बृहज्जाबालचोदितम् ।
काष्ठमालालग्नकण्ठा भविष्यन्ति कलौ युगे ॥ 129

श्रीरुद्रालङ्कृतान्वेदाननधीत्यैव दुर्जनाः ।
अन्याभ्यासपरा नित्यं भविष्यन्ति कलौ युगे ॥ 130

सर्ववेदश्रुतं पुण्यं शिवनामातिपावनम् ।
त्यक्त्वाऽन्यनामसंसक्ता भविष्यन्ति कलौ युगे ॥ 131

सायं शिवार्चनं हित्वा दुर्वार्तालापने रताः ।
अन्यदेवार्चने सक्ता भविष्यन्ति कलौ युगे ॥ 132

शिवमायामोहितानामभाग्यानां दुरात्मनाम् ।
शिवार्चने कलौ प्रीतिर्न कदापि भविष्यति ॥ 133

कलिं प्राप्य महादेवं योऽर्चयिष्यति सर्वदा ।
न तस्मादधिको धन्यः सत्यं सत्यं न संशयः ॥ 134

यावत्पुण्यं कृतयुगे शिवस्याभ्यर्चनाद्भवेत् ।
ततः शतगुणं पुण्यं त्रेतायां शिवपूजनात् ॥ 135

त्रेतायां पूजनाच्छम्भोर्यावत्पुण्यमवाप्यते ।
ततोऽयुतगुणं पुण्यं द्वापरे शिवपूजनात् ॥ 136

द्वापरे शिवपूजातो यावत्पुण्यमवाप्यते ।
ततः कोटिगुणं पुण्यं कलौ शङ्करपूजया ॥ 137

कलावपि महाद्वीपो जम्बूद्वीप इति श्रुतः ।
तत्र शङ्करमभ्यर्च्य दुःखं नाप्नोति मानवः ॥ 138

श्वेतद्वीपादिषु श्रद्धाभक्त्या च शिवपूजया ।
यत्पुण्यं तच्छतगुणं जम्बूद्वीपे शिवार्चनात् ॥ 139

जम्बूद्वीपे च सन्त्येव शिवक्षेत्राणि भूरिशः ।
तेषु शङ्करमाराध्य लभ्यते सुकृतं बहु ॥ 140

जम्बूद्वीपे शिवक्षेत्रे कुम्भघोणाभिधं महत् ।
तस्मिन् क्षेत्रे जन्ममात्राज्जन्म न प्राप्यते पुनः ॥ 141

तत्र शङ्करमभ्यर्च्य यावत्पुण्यमवाप्यते ।
ततः शतगुणं पुण्यं शिवार्चायां चिदम्बरे ॥ 142

चिदम्बरे शिवार्चातो यावत्पुण्यमवाप्यते ।
ततः शतगुणं पुण्यं श्रीमद्वृद्धाचलेश्वरे ॥ 143

वृद्धाचले शिवार्चातो यावत्पुण्यमवाप्यते ।
ततः शतगुणं पुण्यं शिवार्चातोऽनलेश्वरे ॥ 144

ततोऽप्यत्युत्तमं क्षेत्रमरुणाचलनामकम् ।
ततोऽयुतगुणं पुण्यं तत्र शङ्करपूजया ॥ 145

ततोऽप्यत्युत्तमं क्षेत्रं काञ्चीक्षेत्रं शिवात्मकम् ।
ततोऽयुतगुणं पुण्यं तत्र शङ्करपूजया ॥ 146

ततो दक्षिणकैलासः शिवप्रियकरो वरः ।
ततोऽयुतगुणं पुण्यं तत्र शङ्करपूजया ॥ 147

ततः पुण्यतरं क्षेत्रं श्रीशैलक्षेत्रमुत्तमम् ।
ततोऽयुतगुणं पुण्यं तत्र शङ्करपूजया ॥ 148

ततः श्रेष्ठतरं क्षेत्रं काशीक्षेत्रं शिवात्मकम् ।
ततः कोटिगुणं पुण्यं तत्र शङ्करपूजया ॥ 149

ततः श्रेष्ठतरं क्षेत्रं श्रीमदन्तर्गृहाभिधम् ।
ततः कोटिगुणं पुण्यं प्राप्यं शङ्करपूजया ॥ 150

तत्राप्यत्युत्तमं क्षेत्रं ज्ञानवापीतटं वरम् ।
ततः कोटिगुणं पुण्यं प्राप्यं शङ्करपूजया ॥ 151

तत्राप्यत्युत्तमं ज्ञेयं विलासस्थानमैश्वरम् ।
ततः कोटिगुणं पुण्यं प्राप्यं शङ्करपूजया ॥ 152

तत्राप्यत्युत्तमं स्थानं सर्वदेवस्तुतं सदा ।
शिवागारमिति ज्ञेयं तत्तु सर्वोत्तमोत्तमम् ॥ 153

तत्र साम्बो महादेवः सर्वदेवोत्तमोत्तमः ।
सर्ववेदस्तुतो नित्यं लिङ्गाकारेण तिष्ठति ॥ 154

यस्य भासा विभातीदं भुवनं सचराचरम् ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 155

विभाति यस्य भासैव सहस्रकिरणो रविः ।
स एव भगवांस्तत्र ... ... ॥ 156

येनैव भास्यते चन्द्रः पूर्णः सर्वकलाश्रयः ।
स एव भगवांस्तत्र ... ... ॥ 157

येनैव भान्ति नभसि तारकाः सप्रभा अपि ।
स एव भगवांस्तत्र ... ... ॥ 158

यो निष्कलो निर्गुणश्च निराकरो निरञ्जनः ।
स एव भगवांस्तत्र ... ... ॥ 159

यः शान्तो निष्क्रियो नित्यो निरवद्यो निरामयः ।
स एव भगवांस्तत्र ... ... ॥ 160

यः सर्वरूपः सर्वात्मा यः सर्वान्तरगः सदा ।
स एव भगवांस्तत्र ... ... ॥ 161

यः प्रविश्यान्तरं सुप्तं प्रचोदयति मानसम् ।
स एव भगवांस्तत्र ... ... ॥ 162

यः प्रविश्यान्तरं वाचं प्रचोदयति सर्वगः ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 163

यः प्रविश्यान्तरं जिह्वां प्रचोदयति सर्वगः ।
स एव भगवांस्तत्र ... ... ॥ 164

यः प्रविश्यान्तरं नित्यमिन्द्रियाणि प्रचोदयेत् ।
स एव भगवांस्तत्र ... ... ॥ 165

यद्भीत्या वाति पवनो यद्भीत्योदेति भानुमान् ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 166

यद्भीत्या ज्वलते वह्निरिन्द्रश्च कुलिशायुधः ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 167

यत्प्रसादेन वैकुण्ठं प्राप पूर्वं जनार्दनः ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 168

यत्प्रसादेन लोकानां पालकोऽभूज्जनार्दनः ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 169

यत्प्रसादान्महालक्ष्मीं प्राप पूर्वं जनार्दनः ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 170

यत्प्रसादेन दीनोऽपि जायते धनिनां वरः ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 171

यत्प्रसादेन मोक्षोऽपि सुलभः सर्वजन्मनाम् ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 172

न यस्मादधिको देवः सुरासुरनमस्कृतः ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 173

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 174

यस्य स्मरणमात्रेण जन्तुर्मुच्येत बन्धनात् ।
स एव भगवांस्तत्र लिङ्गरूपेण तिष्ठति ॥ 175

तल्लिङ्गपूजयानन्तफलं सम्प्राप्यते जनैः ।
तल्लिङ्गपूजापुण्यस्य नेयत्ता सत्यमुच्यते ॥ 176

तल्लिङ्गं वीक्षितं येन स्पृष्टमभ्यर्चितं मुदा ।
तस्य पापानि सर्वाणि सद्यः नश्यन्ति मूलतः ॥ 177

यत्र काश्यां महादेवो जन्तुमात्रस्य सादरम् ।
देहान्ते परमं मन्त्रं शैवं दातुमिहोद्यतः ॥ 178

तत्र काश्यां महादेवो लीलारूपधरः शिवः ।
उमया सहितः प्रीत्या विचरत्यम्बिकापतिः ॥ 179

यत्र काश्यां महादेवः स्वभक्तेभ्यो यथायथम् ।
ददाति नित्यं सर्वार्थान्सा काशी श्रुतिसम्मता ॥ 180

पश्यन्तु पुण्यपुरुषं शिवपूजापरायणम् ।
एवमेतस्य सततं पूजनं क्रियते मया ॥ 181

अयं धन्यतमो मर्त्यः काशीं प्राप्य महेश्वरम् ।
पूजयित्वा स्थितः प्रीत्या बिल्वपत्रादिसाधनैः ॥ 182

चैत्रशुक्लाष्टमीं प्राप्य सोऽङ्गमुद्धूल्य भस्मना ।
कृत्वा विश्वेश्वरस्यार्चां जजापायं षडक्षरम् ॥ 183

अन्नपूर्णां ततः सम्यक् सम्पूज्य तदनन्तरम् ।
अष्टोत्तरशतं चक्रे मौनेनायं प्रदक्षिणाम् ॥ 184

नमस्कारांस्ततश्चक्रे शतमष्टोत्तरं मुदा ।
पुनः समर्चयामास देवीं त्रिभुवनेश्वरीम् ॥ 185

ततः सायं पुनः प्रीत्या कृत्वा विश्वेश्वरार्चनम् ।
अन्नपूर्णालये प्रीत्या चक्रे जागरणं सुराः ॥ 186

वाचयन् शङ्करस्यैव कथाः श्राव्या मनोहराः ।
उपवासं चकारायं निराहारेण सादरम् ॥ 187

तस्यां रात्रौ महानासीत्सम्मर्दः सुरसत्तमाः ।
प्रदक्षिणनमस्काराः सम्मर्देऽपि कृता मुदा ॥ 188

आवहन्तीति मन्त्रेण कृतो होमो मुनीश्वरैः ।
क्षीरेणाज्येन मधुना सर्वसम्पत्प्रवृद्धिदः ॥ 189

अनेनापि कृतो होमः क्षीराज्यादिभिरादरात् ।
आवहन्तीति मन्त्रेण सर्वसम्पत्तिकाम्यया ॥ 190

ततः प्रातः समुत्थाय विश्वेशार्चनपूर्वकम् ।
अन्नपूर्णामपि प्रीत्या पूजयामास सादरम् ॥ 191

ततोऽयं भोजयामास शैवाञ्छैवसतीस्तथा ।
स्वयं च पारणां चक्रे शिवध्यानपुरःसरम् ॥ 192

ईदृशोऽयं पुरा काश्यां स्थित्वापि तदनन्तरम् ।
चैत्रशुक्लाष्टमीं प्राप्य नार्चयामास शङ्करीम् ॥ 193

देव्येनं प्रेरयामास गन्तुं देशान्तरं ततः ।
अथायं विप्रवर्योऽपि नर्मदां प्राप्य निर्मलाम् ॥ 194

कृतस्नानस्ततो दिष्टया सर्पदष्टो मृतोऽभवत् ।
ततोऽयं भूपतिर्जातः सर्वभूचक्रपालकः ॥ 195

सर्वसौभग्यसम्पन्नः पुत्रपौत्रसमन्वितः ।
ततो मृतोऽयं राजेन्द्रो विमानवरमाश्रितः ॥ 196

गीतः स्तुतश्च गन्धर्वैर्मम लोकमुपागतः ।
मयाऽयं पूज्यते भक्त्या मत्सभासद्भिरव्ययम् ॥ 197

सम्पूज्यते सुरा नित्यं सादरं भक्तिपूर्वकम् ।
कल्पाष्टकमुषित्वात्र ततो भूत्वाऽमराधिपः ॥ 198

काशीं प्राप्य मुदा तत्र देहात्यागं करिष्यति ।
शिवयोः पूजनं पूर्वं कृतमेतेन यत्नतः ॥ 199

यतस्ततः पुनः काशीं संप्राप्यायं शिवाज्ञया ।
सर्वसंसारविच्छित्यै काश्यां सन्त्यक्तजीवितः ॥ 200

मोक्ष महेशकृपया प्राप्नोत्येव न संशयः ।
एतादृशैर्द्विजवरैः पुरा काशीमुपाश्रितैः ॥ 201

मुक्तिः प्राप्ता महेशस्य कृपया सत्यमुच्यते ।
कलौ तु मानुषं जन्म भवत्यत्यन्तदुर्लभम् ॥ 202

तत्र चेन्मानुषं जन्म कर्तव्य शिवपूजनम् ।
मनुष्येष्वपि चेज्जन्म ब्राह्मण्यं ब्राह्मणाद्यदि ॥ 203

तदा त्ववश्यं कर्तव्यं श्रीशिवाभ्यर्चनं मुदा ।
अत्यन्तदुर्लभं जन्म कलौ प्राप्यापि मानुषम् ॥ 204

यदि नाराध्यते शम्भुस्तस्य जन्म निरर्थकम् ।
शिवैकशरणो भूत्वा कलौ यदि वसेन्नरः ॥ 205

तस्य मोक्षो भवत्येव नात्र कार्या विचारणा ।
यथा विना सुवर्णेन दुर्लभे हेमकुण्डले ॥ 206

तथा विना महादेवपूजां मोक्षोऽपि दुर्लभः ।
यथा विना भोजनेन तृप्तिरत्यन्तदुर्लभा ॥ 207

तथा विना महादेवपूजां मोक्षोऽपि दुर्लभः ।
यथा चक्षुर्विना ज्ञानं चाक्षुषं त्वतिदुर्लभम् ॥ 208

तथा विना .... .... ।
यथा वृष्टिं विना सस्यवृद्धिरत्यन्तदुर्लभा ॥ 209

तथा विना .... .... ।
देवत्वमेव देवानां मोक्षस्य प्रतिबन्धकम् ॥ 210

ततः कृतापि सा पूजा नाधुना मोक्षदायिनी ।
कदा देवत्वसम्बन्धनाशोऽस्माकं भविष्यति ॥ 211

कदा दास्यति गौरीशो मोक्षं विश्वेशपूजया ।
पुरा शङ्करमभ्यर्च्य ब्रह्मत्वं प्रार्थितं मया ॥ 212

यद्दत्तं शङ्करेणेदं कदैतन्मे विनङ्क्ष्यति ।
पुरा शङ्करमभ्यर्च्य विष्णुनाप्यति यत्नतः ॥ 213

विष्णुत्वं प्रार्थितं तेन तत्प्राप्तं शङ्कराज्ञया ।
एवं शङ्करमभ्यर्च्य देवैरन्यैश्च सादरम् ॥ 214

महादेवप्रसादेन तत्तत्पदमुपार्जितम् ।
इदानीं मानुषं जन्म विष्णुः प्रार्थयते स्वयम् ॥ 215

मयाऽपि प्रार्थ्यते नित्यं तत्कदा वा भविष्यति ।
इदानीं विष्णुरनिशं शिवपूजापरायणः ॥ 216

शिवपूजां तनोत्येव मुक्तिकामोऽतियत्नतः ।
भवद्भिश्च महादेवः पूजनीयः सुराः सदा ॥ 217

एवमाराधितो देवः कृपां किं न करिष्यति ।
भवदागमने हेतुर्ज्ञात एव मयाऽधुना ॥ 218

तत्तपो भवतां दुःखं न करिष्यति सर्वथा ।
यामोऽद्य वैष्णवं धाम विष्णुः किं वा करिष्यति । 219

श्रुत्वा तद्वाक्यमप्यग्रे यत्नः कार्यो भविष्यति ।

**श्रीमहादेव उवाच -**

इत्युक्त्वा देवि वैकुण्ठं जग्मुर्ब्रह्मादयः सुराः ॥ 220

मदेकसक्तचित्तास्ते स्मरन्तो मामनीश्वरम् ॥ 221

ये नित्यमव्याहतचित्तवृत्ताः(त्या)
सदाशिवाराधनलग्नचित्ताः ।
अन्याश्रयाराधनतो निवृत्ताः
सन्त्येव धन्याः शिवदत्तचित्ताः ॥ 222

॥ इति श्रीशिवरहस्ये सप्तमांशे शिवगौरीसंवादे
पञ्चदशोऽध्यायः ॥



## ॥ षोडशोऽध्यायः ॥

पार्वत्युवाच -

वैष्णवं धाम सम्प्राप्य किमुक्तं ब्रह्मणा विभो ।
तदा जनार्दनेनापि किमुक्तं ब्रूहि तन्मम ॥ 1

श्रीमहादेव उवाच -

शिवे, विष्णुः समालोक्य ब्रह्मादीनमरांस्तदा ।
पप्रच्छ स्वागतं तेषां वर्धयन्मुदमादरात् ॥ 2

विष्णुरुवाच -

कुतः समागतं ब्रह्मन्निन्द्राद्यैरमरैः सह ।
स्वस्वाधिकारे सर्वेषामधुना कुशलं खलु ॥ 3

तावत्कुशलमस्माकं सर्वेषामपि निश्चितम् ।
यावत्साम्बो महादेवः पूज्यते सर्वयत्नतः ॥ 4

अशुभं तु तदा भावि यदा नाभ्यर्च्यते शिवः ।
शिवाऽनभ्यर्चनादेव सङ्कटानि पदे पदे ॥ 5

शिवाराधनसंसक्तो दावानलगतोऽपि सन् ।
दुःखं सर्वात्मना ब्रह्मन्न प्राप्नोति न संशयः ॥ 6

अस्माभिः शिवपूजायां यत्नः कार्योऽतिभक्तितः ।
शङ्कराभ्यर्चनादेव सर्वाः सिध्यन्ति सिद्धयः ॥ 7

तथाच शङ्करस्यैव पूजां कुर्मो निरन्तरम् ।
स्मर्तव्यः शङ्करो नित्यं शं करोतीति शङ्करः ॥ 8

शं नामानल्पमव्यक्तं सुखं निर्वचनातिगम् ।
सततं यस्य जिह्वाग्रे शङ्करेत्यस्ति नाम सः ॥ 9

दुःखभाङ्न भवत्येव सत्यं सत्यं न संशयः ।
त्रिपुण्ड्रधारणं कृत्वा महादेवमनुस्मरन् ॥ 10

यो याति यत्र तत्रैव महादेवोऽधितिष्ठति ।
महादेव महादेव महादेवेति वादिनम् ॥ 11

वत्सं गौरिव गौरीशो धावन्तमनुधावति ।
महादेव महादेव महादेवेत्ययं ध्वनिः । 12

सुधियो मुक्तिकान्तायाः पाणिग्रहणडिण्डिमः ।
महादेव .... .... ध्वनिः ॥ 13

अपमृत्युहरो नूनं कालमृत्युहरोऽपि सः ।
महादेव .... .... ध्वनिः । 14

जन्ममृत्युजराव्याधिभयनिर्हरणक्षमः ।
महादेव महादेव .... .... ध्वनिः ॥ 15

संसारसर्पदष्टानां दिव्यौषधिरसोऽव्ययः ।
महादेवेति वाग्वल्ली चतुरक्षरपल्लवा ।। 16

भक्तिसिक्ता भवत्येका चतुर्वर्गफलप्रदा ।
महादेवेति विमलो नामकल्पतरुर्विधे ।। 17

यो यं कामयते कामं तं तं पूरयति क्षणात् ।
कोटयो ब्रह्महत्यानामगम्यागमकोटयः ।। 18

सद्यः प्रलयमायान्ति महादेवेति कीर्तनात् ।
महादेवेति नामेदं यः शृणोति वदिष्यति ।। 19

न तस्य नरकावासः सत्यं सत्यं न संशयः ।
पुरा कश्चिद् द्विजवरो महादेवमनुस्मरन् ।। 20

वदन्नुच्चैर्महादेवेत्यरण्ये सञ्चचार हि ।
तदा कश्चिद्घोररूपो महापर्वतसन्निभः ।। 21

सूच्यग्रमात्रवदनो दीर्घपिङ्गशिरोरुहः ।
ज्वलद्वह्निकणाकारमहानिःश्वासमोचकः ।। 22

दूराद्ददर्श तं विप्रं महादेवेति वादिनम् ।
तं दृष्ट्वा सोऽपि सन्तुष्टो भक्ष्यं प्राप्तमिति द्रुतम् ।। 23

सन्तृप्तोऽद्य भवामीति विप्राभ्याशमुपाययौ ।
तं दृष्ट्वा द्विजवर्योऽपि पिशाचमतिविह्वलः ।। 24

कोऽयं भयप्रदो मह्यमिति चिन्तापरोऽभवत् ।
यः कोऽपि वासौ भवतु चिन्ता का मम वर्तते ॥ 25

महादेवोऽमराधीशो रक्षां मम करिष्यति ।
भस्मोद्धूलितसर्वाङ्गं महादेवेति वादिनम् ॥ 26

स्प्रष्टुं शक्तः कथं मां हि कालमृत्युरपि स्वयम् ।
गौरीवल्लभकामारे कालकूटविषादन ॥ 27

मामुद्धरापदम्भोधेस्त्रिपुरघ्नान्तकान्तक ।
पाहि पाहि महादेव भक्तवर्गैकजीवन ॥ 28

भयं दूरीकुरुष्वाद्य किमे(यदे)तदनुवर्तते ।
महादेवं स्मरन्तं मामयं चेदनुधावति ॥ 29

तदा संसारभीतिं मे कथं दूरीकरिष्यसि ।
एवमुक्त्वा समुद्धूल्य भस्मना द्विजपुङ्गवः ॥ 30

विल्वपत्रं समाघ्राय दध्यौ देवोत्तमं शिवम् ।
जगादोच्चैर्महादेव शिव शम्भो हरेति च ॥ 31

तच्छ्रुत्वा सर्वपापघ्नं नाम शम्भोर्महेशितुः ।
पिशाचोऽपि स्वकं घोरं देहं तत्याज तत्क्षणात् ॥ 32

स पिशाचतनुं त्यक्त्वा द्रिव्यरूपधरस्ततः ।
ननाम दण्डवद्भूमौ विप्रमालोक्य शाङ्करम् ॥ 33

धन्योऽस्मि त्वत्प्रसादेन शैवोत्तम शिवार्चक ।
पैशाचतनुरेषाद्य त्यक्ता पापकुलाश्रया ।। 34

ब्रह्मकल्पान्यतीतानि बहूनि द्विजसत्तम ।
पिशाचतनुरेषा मे न गता घोरदुःखदा । 35

महादेवेति नामैतदधुना त्वन्मुखाच्छ्रुतम् ।
गतं पापं गतं दुःखं प्राप्ताः सर्वाश्च सम्पदः ।। 36

**विप्रः उवाच -**

दुष्कृतं किं कृतं पूर्वं येनैतत्तनुभाग्भवान् ।
कः पिता तव का माता किन्नाम तव किं कुलम् ।। 37

का जातिस्तव का वृत्तिस्तत्सर्वं वद सत्वरम् ।

**मुक्तपिशाचतनुरुवाच -**

पिता कुलुञ्जको माता सशीला नाम कर्कशा ।। 38

कुलं तु मम सावित्रं ब्राह्मणोऽहं बहुश्रुतः ।
कृतमध्ययनं पूर्वं वेदानां सादरं मया ।। 39

कदापि भस्मना नाङ्गमिदमुद्धूलितं पुरा ।
रुद्राक्षाः सर्वपापघ्ना जाबालश्रुतिसम्मताः ।। 40

न धृताः कण्ठकर्णादिष्वङ्गेष्वादरपूर्वकम् ।
बिल्वपत्रैजलप्लुष्टैरच्छिद्रैः कोमलैर्नवैः ॥ 41

नाराधितो महादेवः प्रत्यहं भक्तिपूर्वकम् ।
अभिषिच्य महादेवं रुद्राध्यायपुरःसरम् ॥ 42

रुद्राभिषेकसलिलं न पीतमघनाशकम् ।
सम्पूज्य शङ्करं पुष्पैर्बिल्वपत्रैश्च कोमलैः ॥ 43

प्रणामा न कृताः पूर्वं मया भक्तिपुरःसरम् ।
शङ्करेति महेशेति महादेवेति सादरम् ॥ 44

न स्मृतं शाङ्करं नाम महापातकनाशकम् ।
मुक्तिप्रदायिनी काशी साक्षादीश्वररूपिणी ॥ 45

न दृष्टा न स्मृता पूर्वमभाग्यपरिपाकतः ।
या काशी संस्मृता दृष्टा श्रुताप्यघविनाशिनी ॥ 46

सा काशी न मया दृष्टा घोरदुष्कृतकर्मणा ।
यत्र संसारबीजानां विनाशो जायते द्विज ॥ 47

सा काशी .... .... ।
यस्यां मृतस्य विश्वेशो मुक्तिं प्रीत्या प्रयच्छति ॥ 48

सा काशी .... .... ।
यस्यां काश्यां महातीर्थं मणिकर्णीति संज्ञितम् ॥ 49

सा काशी .... .... ।
यस्यां काश्यां महातीर्थं ज्ञानवापीति संज्ञितम् ।। 50

सा काशी .... .... ।
यस्यां काश्यां महालिङ्गं श्रीमद्विश्वेश्वराभिधम् ।। 51

यस्यां काश्यामन्नपूर्णा सर्वसौभाग्यदायिनी ।
सा काशी न मया दृष्टा घोरदुंष्कृतकर्मणा ।। 52

किञ्च पूर्वं तु सायाह्ने पुत्रलालनतत्परः ।
भार्यां विलोक्य युवतीं वाक्यमेतदवादिषम् ।। 53

सन्नद्धां कुरु शय्यां मे महोत्साहकरां वराम् ।
क्षीरमानय पानार्थं शर्करामधुसंयुतम् ।। 54

इत्युक्तं मद्वचः श्रुत्वा सा वभाषे वचस्तदा ।
सायाह्नोऽयं महादेवपूजा कार्यातिभक्तितः ।। 55

पश्य पश्य जनानेताञ्छिवपूजापरायणान् ।
पूजाद्रव्यकराः सर्वे प्रयान्ति शिवमन्दिरम् ।। 56

इत्युक्तं तद्वचः श्रुत्वा भ्रान्तेत्येतामुदैरयम् ।
तच्छ्रुतं शिवभक्तेन केनचिद्दुर्वचस्तदा ।। 57

शाङ्करेण तदा शप्तस्तदैवाहं द्विजोत्तम ।
तच्छापेन तनुः प्राप्ता पैशाची दुःखदायिनी ।। 58

नाराधयति यः सायं देवदेवोत्तमं शिवम् ।
स पिशाचो भवत्येवेत्युक्तं शैवेन तेन हि ॥ 59

तेन शापेन पैशाची तनुः प्राप्ता मया पुरा ।
ततो दुःखं बहु प्राप्तं वने संभ्रमता मया ॥ 60

बहवोऽस्मिन् वने सन्ति पिशाचतनुभागिनः ।
अनर्चितमहादेवा सायङ्काले यथाविधि ॥ 61

अहं तु त्वत्प्रसादेन मोचितः कर्मबन्धनात् ।
तव शिष्यो भविष्यामि रक्ष रक्ष यथोचितम् ॥ 62

इत्युक्त्वा प्रणतं विप्रमुत्थाप्य विनयान्वितम् ।
पञ्चाक्षरं महामन्त्रं संस्मरन्नघनाशकम् ॥ 63

ततस्तस्मै ददौ विप्रो मन्त्रं तं शैवमुत्तमम् ।
स गृहीत्वा मनुं शैवमतितुष्टोऽभवत्तदा ॥ 64

अतो ब्रह्मन्महादेवः पूजनीयः प्रयत्नतः ।
अनन्यसदृशो देवः शिव एव महेश्वरः ॥ 65

तमन्यसदृशं मत्वा नरकं याति मानवः ।
पुरा कश्चिद् द्विजवरो हिमवद्देशसंस्थितः ॥ 66

ददर्शान्यं द्विजं तत्र तमुवाचाथ सादरम् ।

**विप्र उवाच -**

द्विज देवेषु कः श्रेष्ठः पूज्यो देवोत्तमश्च कः ॥ 67

यत्पूजनेन मोक्षश्रीः प्राप्तव्या ब्रूहि तत्वतः ।
इत्युक्तं तद्वचः श्रुत्वा मोहाद्वाचमुवाच सः ॥ 68

शिवोपेन्द्रादयः सर्वे तुल्यशीला द्विजोत्तम ।
ततस्तद्वचनं श्रुत्वा भ्रान्तोऽयमिति तं द्विजम् ॥ 69

भर्त्सयित्वा ययौ विप्रः शिवमेव स्मरन्हृदि ।
अथोग्रसर्पदष्टोऽसौ दूतैर्नीतो यमक्षयम् ॥ 70

यमाग्रे ताडितो घोरं प्रललापाकुलेन्द्रियः ।

**यमदूत उवाच -**

यमायं ब्राह्मणः पूर्वं हिमवद्गिरि संश्रयः ॥ 71

सर्वदान्यसुरैः साकं समं वदति शङ्करम् ।

**विष्णुरुवाच -**

इत्युदीरितमाकर्ण्य यमदूतवचो यमः ॥ 72

विवृत्य लोचने घोरे क्रोधसंस्फुरिताधरः ।
तीक्ष्णमत्यन्तकुटिलं हेतिमत्यन्तलोहितम् ॥ 73

जग्राहात्यन्तसन्तप्तः कम्पयन्नखिलानपि ।
ततस्तद्रसनामाशु चिच्छेद कुपितेक्षणः ।। 74

ततः प्रवेशयामास नरकं बहुदारुणम् ।
तस्मादनन्यसदृशं महादेवं सुराधिपम् ।। 75

योऽन्यतुल्यतया वेत्ति स याति नरकं ध्रुवम् ।
यः साक्षी कर्मणां सर्वभूतात्मा च परात्परः ।। 76

स देवोऽन्यामरैस्तुल्यो भविष्यति कथं वद ।
अतः सर्वामराधीशः शङ्करः करुणाकरः ।। 77

पूजनीयः प्रयत्नेन चतुर्वर्गफलार्थिभिः ।
पुरा तु हिमवत्प्रान्ते कश्चिदासीद्द्विजोत्तमः ।। 78

लिङ्गपूजापरो नित्यं निष्कामः शङ्करप्रियः ।
ऐहिकामुष्मिकान्भोगाननवधीर्य शिवार्चकः ।। 79

सर्वदा बिल्वपत्राद्यैः पूजयामास धार्मिकः ।
अथेनं वीक्ष्य भर्तारं तत्पत्नी पतिदेवता ।। 80

कृताञ्जलिरुवाचेदं वचनं ललितानना ।

**विमलोवाच -**

धर्मप्रजार्थमुद्वाहस्त्वया नाथ कृतः पुरा ।। 81

एतावत्कालपर्यन्तं प्रजा मयि न दृश्यते ।
यद्येको वा भवेत्पुत्रस्तस्मादग्रेऽपि सन्ततिः ।। 82

वृद्धिमेष्यत्यन्यथा सा कथं वा वृद्धिमेष्यति ।
शिवभक्तः सदाचारः सर्वदा शिवपूजकः ।। 83

यस्य वंशे न सञ्जातस्तन्कुलं किं न नश्यति ।
इत्युक्त्वा नम्रवदना सिञ्चन्ती कोष्णमश्रु च ।। 84

तूष्णीमुवास विमला तामुवाचाथ स द्विजः ।
शृणु कौतूहलं भद्रे यदुक्तं तत्तथैव हि ।। 85

परन्तु मोहमाया या सा विच्छिन्ना न हि त्वयि ।
शिवैकशरणः पुत्रो भवेद्यदि तथैव हि । 86

सुखं भवत्यन्यथा तु सुखलेशोऽपि न ध्रुवम् ।
जातोऽपि पुत्रः सततं शिवैकशरणः सदा ।। 87

शिवं सम्पूज्य सततं स्थास्यतीति न निश्चयः ।
पुरा लक्ष्मीरुवाचैवं विष्णुं प्रति हरिस्ततः ।। 88

एवमेवोत्तरं दत्वा पुनरन्यदुवाच च ।
पुत्रस्ते भविता लक्ष्मीः कश्चिदत्यन्तसुन्दरः ।। 89

स पुष्पबाणो भविता जगन्मोहकरः सदा ।
कदाचित्तादृशः पुत्रो भगवत्कृपया विना ।। 90

यदि न स्यात्तदा दुःखं न कार्यं सर्वथा त्वया ।
अन्यसाधारणत्वेन यदि जानाति शङ्करम् ॥ 91

स तु जातोऽपि ते पुत्रो मरिष्यति न संशयः ।
अन्यसाधारणत्वेन मत्वा देवोत्तमं शिवम् ॥ 92

को वा जीवति को वाऽन्ते सुखं प्राप्नोति तद्वद ।
को वा माहेश्वरीमाज्ञामन्यथाकर्तुमिच्छति ॥ 93

कदाचिद्यदि पश्यामो वयं शङ्करदूषकम् ।
तदास्माकमवस्थानं न कुत्रापि भविष्यति ॥ 94

ताडयिष्यन्ति शूलाग्रैरस्मान्छङ्करकिङ्कराः ।
ते सर्वे निर्भया वीरा नौवास्मान्गणयन्ति हि ॥ 95

शिवभक्तिं प्रकुर्वाणैरप्यस्माभिरहर्निशम् ।
कम्पायमानैरमरैः स्थीयते सत्यमुच्यते ॥ 96

पुरा तु शिवपूजार्थमस्माभिरमरैर्गतम् ।
सायङ्काले हरद्वारि प्रवेशो नाभवत्तदा ॥ 97

ततोऽस्माभिः सुरैः सर्वैरेकीभूयाथ सत्वरम् ।
द्वारि प्रवेष्टुमुद्युक्तमादायार्चनसाधनम् ॥ 98

तदा वेत्रं समादाय कश्चिच्छङ्करकिङ्करः ।
अभ्याययावतिक्रुद्धः क्रोधसंरक्तलोचनः ॥ 99

स ततो भ्रामयामास वेत्रं काञ्चनरञ्जितम् ।
वेत्राग्रसङ्गमात्रेण सर्वेऽपि पतिता वयम् ॥ 100

कः समर्थोऽन्यथा कर्तुं शैवाज्ञां जगतीतले ।
सुराणामपि शास्तारस्ते यतः क्रूरशासनाः ॥ 101

आदौ सायं महादेवं पूजयत्यम्बिका ततः ।
षण्मुखोऽभ्यर्चयत्यम्बां शङ्करं च सुरेश्वरम् ॥ 102

ततो गणपतिः साम्बमभ्यर्चयतिसादरम् ।
ततोऽर्चयति सर्वेशं नन्दीचातीव भक्तितः ॥ 103

ततोऽर्चयन्ति सर्वेशं प्रमथाः साधुसाधनाः ।
अनन्ताः प्रमथास्तेषां सङ्ख्यां कर्तुं न शक्यते ॥ 104

ततः परं सुरैः सर्वैरस्माभिः पूज्यते शिवः ।
ततः परं प्रयत्नेन गन्धर्वैः पूज्यते शिवः ॥ 105

ततः सम्पूज्यते शम्भुः किन्नरैर्भूरिसाधनैः ।
ततः सम्पूज्यते शम्भुः शेषाद्यैरुरगेश्वरैः ॥ 106

ततो मुनिगणैरन्यैः पूज्यते परमेश्वरः ।
ततो नरवरैरन्यैः पूज्यते सततं शिवः ॥ 107

एवमेव क्रमेणैव सायमन्वहमीश्वरः ।
सर्वैरभ्यर्च्यते साम्बो देवदेवोत्तमः शिवः ॥ 108

शैववेत्रप्रहाराणां पात्रं चेदमरा वयम् ।
कोऽन्यः समर्थः शैवाज्ञामन्यथा कर्तुमुच्यताम् ॥ 109

पुरा समागतः कश्चिदिह शङ्करकिङ्करः ।
समागते तदा शीघ्रं भ्रमान्नैवोत्थितं मया ॥ 110

तदा जहार वैकुण्ठं स सिह्मासनसंस्थितः ।
निपात्य मां महारण्ये जलान्नादिविवर्जिते ॥ 111

ततः शिवैकनिष्ठेन मया चीर्णं तपोमहत् ।
ततः शिवाज्ञया प्राप्तो वैकुण्ठोऽयं मया प्रिये ॥ 112

शिवनिन्दकसङ्गश्चेत्क्रियते भ्रान्तितो मया ।
तदा निःसंशयं शान्तिर्नैवाप्येताम्बुजालये ॥ 113

इत्युवाच पुरा लक्ष्मीं विष्णुः शिवपरायणः ।
तथा च सन्ततिः शुद्धा प्राप्तव्या सर्वथा जनैः ॥ 114

अशुद्धा सन्ततिर्जाता ह्यस्माकं त्वप्रयोजिका ।
सा सन्ततिर्यतोऽस्माकं सुखदा न भविष्यति ॥ 115

शिवव्रतमतश्चर्यं श्रद्धया नान्यथा गतिः ।
पुत्रो यस्य भवेत्साधुस्तस्य भाग्यं महत्तरम् ॥ 116

जातो न पुत्रो दिष्ट्या वै यो न शैवो भविष्यति ।
व्यर्थं च जीवनं तस्य तत्कुलंचैव दुर्भगम् ॥ 117

अशौवो यदि तद्वंशे भवत्येकोऽपि निर्मले ।
स वंशःसर्वथा याति नरकं सत्यमुच्यते ॥ 118

इत्युक्त्वा यामिनीमध्ये भार्यां सङ्गमकामिनीम् ।
रेमे सप्रेम विप्रोऽसौ ततो गर्भं दधार सा ॥ 119

कालेनासूत सा पुत्रं पद्मपत्रायतेक्षणा ।
दृष्ट्वा सुतं सा सन्तुष्टा बभूव सुतवत्सला ॥ 120

ततः पुत्रं समुत्पन्नं श्रुत्वा तज्जनकस्तदा ।
जातकर्मादिकं कर्म चक्रे मुदितमानसः ॥ 121

ततोऽन्नप्राशनादीनि तत्तत्कालेषु तत्पिता ।
कृत्वोपनयनं चापि चक्रे काले यथाविधि ॥ 122

वेदानध्यापयामास साङ्गांश्चापि यथाक्रमम् ।
शास्त्राणि धर्मशास्त्रादीन्यपि मेधाविनं सुतम् ॥ 123

विद्याविनयसम्पन्नं पितरौ वीक्ष्य तौ सुतम् ।
मुदितौ तनयं प्रेमपूर्वं पुपुषतुः सदा ॥ 124

ततः कदाचित्तं पुत्रं विलोक्यातीव सुन्दरम् ।
किमस्य भाग्यं भावीति दध्यौ योगपरः पिता ॥ 125

ततः स षोडशे वर्षे मृत्युपाशं गमिष्यति ।
इत्थं विचिन्त्य विप्रोऽसौ क्षणं दुःखवशोऽभवत् ॥ 126

ततश्चित्तं समाधाय स्वयं स द्विजपुङ्गवः ।
पुत्रमाहूय चालिङ्ग्य बभाषे वचनं तदा ॥ 127

श्रुतिपारग पुत्राहं दर्शनात्तव सर्वदा ।
तुष्टोऽस्मि मानसं मेऽद्य बहुधा व्याकुलं सुत ॥ 128

ध्यानं त्वद्विषयं पुत्र कृतमद्य मया ततः ।
अल्पायुष्ट्वं त्वयि ज्ञातं पितृदुःखप्रवर्धकम् ॥ 129

इत्युक्तं तद्वचः श्रुत्वा तदा तज्जननीं सुतः ।
उवाच वचनं श्लक्ष्णं पितृसन्तोषवर्धकः ॥ 130

**पुत्र उवाच -**

किमर्थं क्रियते दुःखं मातर्दुःखं परित्यज ॥ 131

यदि गच्छेच्छरीरं मे मम हानिर्न सर्वथा ।
नित्योऽहमजरोऽनन्तो मम नाशः कथं भवेत् ॥ 132

कालत्रयेऽपि नाशस्तु मय्यबाधित एव हि ।
शरीरमेतदनिशं स्थातव्यमिति चेन्मतिः ॥ 133

जन्यस्यास्य शरीरस्य नाशः स्वाभाविकः खलु ।
शरीरनाशो विज्ञातो दैवादद्य मयाऽधुना ॥ 134

अतोऽहं पूजयिष्यामि भक्तिपूर्वं महेश्वरम् ।
भस्मनोद्धूल्य सर्वाङ्गं धृत्वा त्रिपुण्ड्रकं ततः ॥ 135

रुद्राक्षधारणं कृत्वा पूजयिष्यामि शङ्करम् ।
शिव काशीति सततं प्रवक्ष्ये नाम शाङ्करम् ॥ 136

एतन्नामद्वयं नित्यं मोक्षदं सर्वसिद्धिदम् ।
शिव इत्यक्षरद्वन्द्वं येन संस्मृतमादरात् ॥ 137

तेन सर्वाणि पापानि तीर्णान्येव न संशयः ।
काशीति परमो मन्त्रः सर्वरक्षामणिस्ततः ॥ 138

स येन धार्यते कण्ठे जितं तेन जगत्त्रयम् ।
क्षयासन्ने शरीरेऽस्मिन्काशीप्राप्तिर्ममानघ ॥ 139

दुर्लभा सा यतः काशी देवानामपि दुर्लभा ।
यस्यां काश्यां सुराधीशो विश्वेशो विश्ववन्दितः ॥ 140

साम्बस्तिष्ठति सा काशी दुर्लभा सर्वदा नृणाम् ।
काशीनिवासिनो लोके सर्वभोगस्तृणायते ॥ 141

सा काशी मोक्षदा नित्यं कथं प्राप्या मयाऽधुना ।
यस्यां काश्यां तु चण्डालः पूज्यते विबुधोत्तमैः ॥ 142

सा काशी दुर्लभा जाता मरणावसरे मम ।
यस्यां न कलिपापानि प्ररोहन्ति कदाचन ॥ 143

सा काशी मुक्तिदा साक्षान्मरणे दुर्लभा मम ।
जननीगर्भदुःखानि काश्यां तु मरणे सति ॥ 144

न बाधन्ते न बाधन्ते न बाधन्ते न संशयः ।
संसारबीजनाशस्तु काश्यामेव प्रजायते ॥ 145

मम जन्मान्यतीतानि कोटिशो दुष्टयोनिषु ।
तेषु दुःखानि भुक्तानि कोटिशो हि मुहुर्मुहुः ॥ 146

मातृगर्भे मलाक्रान्ते मूत्रशोणितसङ्कुले ।
महद्दुःखं मया भुक्तं बहुधा दुर्निवारणम् ॥ 147

प्रसवावसरे दुःखं यद्भुक्तं पूर्वमुत्कटम् ।
अहोऽनन्तदुराचारफलोपेतं दुरत्ययम् ॥ 148

नरकेषु विचित्रेषु संस्थितिश्चाभवन्मम ।
तेषु दुःखानि भुक्तानि बहुकालमतः परम् ॥ 149

यतो नाराधितः शम्भुः पूर्वमादरपूर्वकम् ।
ततो दुःखानि बहुधा प्राप्तान्येव मया पुरा ॥ 150

विज्ञाततनुनाशोऽहं भस्मोद्धूलनपूर्वकम् ।
पूजयित्वा महादेवं शिवनाम वदाम्यहम् ॥ 151

ममास्य वपुषो मातर्नापेक्षा वर्तते ध्रुवम् ।
स्नेहपाशो हि भवतां पुत्रदेहेऽस्ति नश्वरे ॥ 152

कियत्कालमवस्थानं शरीरस्यास्य रोचते ।
मातर्मे वद तत्सत्यं करिष्येऽहं न संशयः ॥ 153

इत्युक्तं तद्वचः श्रुत्वा जननी निजगाद सा ।
समालिङ्ग्याश्रुपूर्णाक्षी पुत्रं वीक्ष्यातिसुन्दरम् ॥ 154

आब्रह्मकल्पं पुत्रेदं शरीरं तव तिष्ठतु ।
तावतैव मम प्रीतिरन्यथा दुःखमेव मे ॥ 155

इत्युदीरितमाकर्ण्य मातुस्तु वचनं सुतः ।
भविष्यति तथैवेति जगाद वचनं मुदा ॥ 156

शरीररक्षणोपायस्तिष्ठत्येको महान्मम ।
तेनोपायेन मे मातः स्थास्यत्येषा तनुः सदा ॥ 157

शिवपूजैव सर्वेषां चतुर्वर्गफलप्रदा ।
मम सा किममुं देहं सम्यग्रक्षितुमक्षमा ॥ 158

ततः शिवार्चनं नित्यं करिष्यामीष्टसिद्धये ।
ब्रह्मत्वं ब्रह्मणे दत्तं शिवेन शिवपूजया ॥ 159

किं नो रक्षिष्यतीदं मे सर्वदेवेश्वरो वपुः ।
इत्युक्त्वा पितरं नत्वा बभाषे वचनं तदा ॥ 160

मृत्युञ्जयमनुं मह्यमञ्जसोपदिशेति सः ।
ततस्तमास्तिकं दृष्ट्वा शङ्करार्चनतत्परम् ॥ 161

द्विजः प्रेम्णाश्रुपूर्णाक्षः समालिङ्ग्यात्मजं स्वकम् ।
ततस्तं भस्मरुद्राक्षालङ्कृताङ्गमकल्मषम् ॥ 162

पुत्रं स्वाङ्के सन्निवेश्य मनुं त्रैयम्बकं ददौ ।
ततः सन्तुष्टहृदयः प्राप्य त्रैयम्बकं मनुम् ॥ 163

सम्पूज्य पितरं सम्यङ्मेधावी निर्ययौ गृहात् ।
ततस्तं निर्गतं दृष्ट्वा पुत्रं तज्जननी तदा ॥ 164

हा पुत्र कुत्र याहीति तेनैव सह निर्ययौ ।
ततः स गत्वा मेधावी सरस्तीरमनुत्तमम् ॥ 165

स्नानं चक्रे विधानेन मनुं त्रैयम्बकं स्मरन् ।
स्नात्वा वासः समादाय प्रोक्षितं भस्मवारिणा ॥ 166

उद्धूलनं चकारादौ मन्त्रपूतेन भस्मना ।
त्रिपुण्ड्रालङ्कृतं चक्रे ललाटं सितभस्मना ॥ 167

त्रियायुषेति वेदोक्तं स्मरन्मन्त्रं शिवात्मकम् ।
अदौ मूर्ध्नि विधायैव त्रिपुण्ट्रं सितभस्मना ॥ 168

त्रिपुण्ट्रधारणं चक्रे ललाटे तदनन्तरम् ।
ततोऽङ्गेषु च सर्वेषु त्रिपुण्ड्रं विधिपूर्वकम् ॥ 169

जाबालोक्तेन मार्गेण चकार सितभस्मना ।
ततः परं यथायोग्यं रुद्राक्षालङ्कृतः शुचिः ॥ 170

समाप्य सान्ध्यं कर्मापि प्रणम्येश्वरमादरात् ।
सम्पाद्य बिल्वपत्राणि पुष्पाणि विविधानि च ॥ 171

निर्माय मृण्मयं लिङ्गं पूजयामास शङ्करम् ।
एवं दिनाष्टकं तस्थौ सम्पूज्य परमेश्वरम् ॥ 172

ततोऽह्नि नवमे प्रातः शिवपूजपरोऽभवत् ।
आदाय जलपुष्पादीन्यनेकानि शिवार्चकम् ॥ 173

सङ्कल्पपूर्वकं शम्भोश्चक्रे रुद्राभिषेचनम् ।
तदैव मृत्युर्विविधैर्दूतैरुग्रैः समावृतः ॥ 174

समाययावतिक्रुद्धो विमृशंस्तमितस्ततः ।
तदा तमागतं मृत्युं दृष्ट्वा तज्जननी सुतम् ॥ 175

उवाच वचनं भीतया भृशव्याकुलितेन्द्रिया ।
पुत्र कोऽयमिहायाति पश्य पश्यातिभीषणम् ॥ 176

प्रायशो मृत्युरेवायं भविष्यति न संशयः ।
विशीर्णं जायते नूनमिदानीं हृदयं मम ॥ 177

नानुभूतं मया पूर्वं भयमेतादृशं महत् ।
इत्युक्तं तद्वचः श्रुत्वा पूजयन् शङ्करं मुदा ॥ 178

मौनी धैर्यं विवृत्यैनां ज्ञापयामास संज्ञया ।
ततो यथाक्रमं पूजां कृत्वा देवस्य शूलिनः ॥ 179

त्रैयम्बकं महामन्त्रं जजाप स्थिरमानसः ।
ततः स्तोत्रं चकारेदं महामृत्युनिवारकम् ॥ 180

अञ्जलिं मूर्ध्नि विन्यस्य ध्यायन्नेव त्रिशूलिनम् ।

**मेधावी उवाच -**

ओं नमः शम्भवे नित्यं मृत्युञ्जय नमोऽस्तु ते ।। 181

ओं नमः पार्वतीनाथ शरणागतवत्सल ।
ओं नमो विश्वरूपाय ओं नमोऽनन्तमूर्तये ।। 182

ओं नमो रूपहीनाय नानारूपाय ते नमः ।
ओं नमो निष्कलेशाय ओं नमो निर्गुणाय ते ।। 183

ओं नमो निर्विकाराय शान्ताकाराय ते नमः ।
ओं नमो निष्प्रपञ्चाय नमः श्रुत्यात्मकाय ते ।। 184

ओं नमः कालरूपाय कालातीताय ते नमः ।
ओं नमः श्रीमहेशाय सर्वाधाराय ते नमः ।। 185

ओं नमः पुण्यरूपाय पुण्यातीताय ते नमः ।
ओं नमो भूस्वरूपाय ओं नमोऽम्बुस्वरूपिणे ।। 186

ओं नमोऽग्निस्वरूपाय ओं नमो वायुमूर्तये ।
ओं नमो व्योमरूपाय दिव्यरूपाय ते नमः ।। 187

ओं नमः कालरूपाय यज्वरूपाय ते नमः ।
ओं नमो भानुरूपाय चन्द्ररूपाय ते नमः ।। 188

ओं नमः सर्वरूपाय शरण्याय नमो नमः ॥ 189

(नमस्ते रुद्र मन्यव उतोत इषवे नमः ।
इत्यादि तं वो जम्भे दधामीति पर्यन्तं नमकं पठित्वा
पुनः स्तोत्रम्)

प्रणतोऽस्मि महादेव प्रपन्नोऽस्मि सदाशिव ।
निवारय महामृत्युं मृत्युञ्जय नमोऽस्तु ते ॥ 190

कालकूटधर श्रीमन्कालकाल कृपानिधे ।
निवारय महामृत्युं मृत्युञ्जय नमोऽस्तु ते ॥ 191

चन्द्रशेखर विश्वात्मन्करुणाकर शङ्कर ।
निवारय महामृत्युं मृत्युञ्जय नमोऽस्तु ते ॥ 192

ऋग्यजुःसामरूपेश त्रिलोचन सुरोत्तम ।
निवारय .... .... ॥ 193

अनन्तामेयकल्याण कल्याणगुणसंश्रय ।
निवारय .... .... ॥ 194

सुरेश्वर सुराराध्य निर्दग्धत्रिपुरासुर ।
निवारय .... .... ॥ 195

पाशाङ्कुशधर श्रीमन्नमो डमरुभूषण ।
निवारय .... .... ॥ 196

भस्मोद्धूलितसर्वाङ्ग हर निर्धूतकल्मष ।
निवारय .... .... ॥ 197

प्रदर्शय महाशूलं कल्पक्षयकरं हर ।
निवारय .... .... ॥ 198

भुजङ्गभूषण श्रीमन्वृषभध्वज विश्वग ।
निवारय .... .... ॥ 199

इति स्तुत्वा महादेवं दत्वा पुष्पाञ्जलिं ततः ।
प्रणम्य बहुधा प्रीत्या ननर्तखिदमादरात् ॥ 200

पुनः सम्पूज्य विश्वेशं बिल्वपत्रैर्मनोहरैः ।
पुनर्मृत्युहरं मन्त्रं जजाप द्विजपुङ्गवः ॥ 201

तदानीं द्विजमालोक्य शिवपूजापरायणम् ।
मृत्युः स्वपार्श्वगं चित्रगुप्तं वीक्ष्य वचोऽब्रवीत् ॥ 202

**मृत्युः उवाच -**

एतमल्पायुषं विप्रमहं नेतुमिहागतः ।
पाशप्रहारशक्तिर्मे कुण्ठितास्मिन्द्विजेऽधुना ॥ 203

इतः परं कथं नेयो मृत्युकालमपास्य हि ।
धैर्येण शिवलिङ्गैकनिष्ठस्तिष्ठति पश्य तम् ॥ 204

एनमुद्दिश्य बहवो व्याधयः प्रेरिताः पुरा ।
न शक्तास्त इमं स्प्रष्टुं बहुदुःखप्रदा अपि ॥ 205

मयाद्य येन वेगेन नेतुमेतं समागतम् ।
तेन वेगेन तं नेतुं सर्वथा नैव शक्यते ॥ 206

इच्छाम्यहं बलादेव नेतुमेनं द्विजोत्तमम् ।
पन्तु गतिरेवात्र कुण्ठिता मम सर्वथा ॥ 207

अव्याहता गतिश्चित्रगुप्त पूर्वं ममाभवत् ।
अद्यैव कुण्ठिता जाता शक्तिर्मे द्विजबालके ॥ 208

उपस्थितोऽस्य विप्रस्य मृत्युकाल इति ध्रुवम् ।
समागतोऽस्मि मरणं कथमस्य न जायते ॥ 209

मया तु तादृशा नीता ये चापि सुरवन्दिताः ।
कथं मे कुण्ठिता शक्तिरेतस्मिन्द्विजबालके ॥ 210

इन्द्रपुत्रो मयानीतः पूर्वमत्यन्तलीलया ।
ब्रह्मपुत्राश्च बहवो नीता एव मुहुर्मुहुः ॥ 211

विष्णोः पुत्रोऽपि मदनो लक्ष्मीप्रीतिविवर्धनः ।
अत्यन्तबलवन्तोऽपि मया नीताः क्षणादिव ॥ 212

एतादृशस्य शक्तिर्मे कथमत्रातिकुण्ठिता ।
किं कर्तव्यं मयेदानीं कर्तव्यं नोपलक्ष्यते ॥ 213

कथमेतादृशः कालो ममेदानीं समागतः ।
अयमल्पायुरित्यल्पो मया नेतुं न शक्यते ।। 214

अधिकारः शिवेनाद्य नूनं मन्दीकृतो मम ।
इत्युक्तं तद्वचः श्रुत्वा चित्रगुप्तो महामतिः ।। 215

वचो मृत्युमुवाचेदमतिविस्मयकारणम् ।

**चित्रगुप्तः उवाच -**

महामृत्युहरं मन्त्रं जपत्ययमिहार्भकः ।। 216

सम्पूज्य शाङ्करं लिङ्गं बिल्वपत्रादिभिर्मुदा ।
स्वर्गापवर्गदातारं शङ्करं योऽर्चयिष्यति ।। 217

स नो मृत्युवशं याति कल्पकालेऽप्यसंशयम् ।
अभीप्सितार्थदं नित्यं महेशं योऽर्चयिष्यति ।। 218

स नो मृत्युवशं याति .... .... ।
अनन्यशरणो नित्यं योऽर्चयिष्यति शङ्करम् ।। 219

स नो मृत्यु .... .... ।
मृत्युञ्जयं महारुद्रं योऽर्चयिष्यति शङ्करम् ।। 220

स नो मृत्यु .... .... ।
सर्वदेवोत्तमं साम्बं योऽर्चयिष्यति शङ्करम् ।। 221

स नो मृत्यु .... .... ॥
मृत्युञ्जयं समभ्यर्च्य बिल्वपत्रादिसाधनैः ॥ 222

कालमृत्युं तरन्त्येव किमुतह्यपमृत्यवः ।
यत्पूजया पुरा विष्णुर्विष्णुत्वं प्राप दुर्लभम् ॥ 223

यत्पूजया पुरा ब्रह्मा ब्रह्मत्वं प्राप दुर्लभम् ।
तदर्चनपरः कोऽपि न मृत्युवशमेष्यति ॥ 224

यत्पूजया विमुक्तिश्चाप्ययत्नेनैव लभ्यते ।
यत्पूजया विनश्यन्ति भीकरा आपदः क्षणात् ॥ 225

तदर्चनपरः कोऽपि न मृत्युवशमेष्यति ।
यः सर्वरूपः सर्वात्मा साक्षी सकलकर्मणाम् ॥ 226

तदर्चनपरः कोऽपि न मृत्युवशमेष्यति ।
यः कालकालः कालात्मा कालरूपी सदाशिवः ॥ 227

तदर्चनपरः कोऽपि न मृत्युवशमेष्यति ।
यस्त्रिणेत्रो विश्वकर्ता विश्वस्य परिपालकः ॥ 228

तदर्चनपरः कोऽपि .... .... ।
यमर्चयन्ति योगीन्द्राः सर्वदा साम्बमीश्वरम् ॥ 229

तदर्चनपरः .... .... ।
स एव सुखमाप्नोति स एवाखिलसम्पदः ॥ 230

यस्य नित्यं महादेवे भक्तिरव्यभिचारिणी ।
तस्यैव जन्म सफलं जीवितं च सुजीवितम् ॥ 231

तस्यैव जननी धन्या तस्यैव कुलमुत्तमम् ।
यस्य नित्यं महादेवे .... .... ॥ 232

तस्यैव जनको धन्यो धन्यस्तस्य पितामहः ।
यस्य नित्यं .... .... ॥ 233

तस्यैवारोग्यमनिशं आयुर्वृद्धिः क्षणे क्षणे ।
यस्य नित्यं .... .... ॥ 234

तस्यैव भाग्यमुत्कृष्टं तस्यैव सकलोत्सवाः ।
यस्य नित्यं .... .... ॥ 235

तस्यैव विमलं ज्ञानं तस्यैव विमलं मनः ।
यस्य नित्यं .... .... ॥ 236

तस्यैव विमलं शीलं तस्यैव विमलं यशः ।
यस्य नित्यं .... .... ॥ 237

अधीतवेदो बालोऽपि मृत्युञ्जयमनामयम् ।
जपत्ययं मयामन्त्रं पूजयित्वा सदाशिवम् ॥ 238

मृत्युञ्जयेन मन्त्रेण मृण्मयं लिङ्गमुत्तमम् ।
सम्यग्बिल्वतरोर्मूले पूजयत्यवलोकय ॥ 239

यस्तु बिल्वतरोर्मूले शुद्धो मृत्युञ्जयं जपेत् ।
तस्य मृत्युभयं नास्ति सत्यं सत्यं मयोच्यते ॥ 240

बिल्वमूले महादेवं लिङ्गरूपिणमास्तिकः ।
पूजयत्यतियत्नेन मृत्युपाशविमुक्तये ॥ 241

सिध्यन्ति सम्पदस्तस्य बिल्वमूले शिवार्चनात् ।
यस्यास्त्यनन्यगा भक्तिर्महादेवे सुरोत्तमे ॥ 242

शिवैकशरणो यस्तु पूजयिष्यति शङ्करम् ।
स एव भाग्यवाँल्लोके योग्यो मोक्षश्रियोऽपि च ॥ 243

बिल्वमूले बिल्वपत्रैः क्षीरप्लुष्टैरकल्मषैः ।
हुत्वा शैवेन मनुना गोलक्षाधिपतिर्भवेत् ॥ 244

बिल्वमूले बिल्वपत्रैर्घृतप्लुष्टैरखण्डितैः ।
हुत्वा शैवेन मनुना लभन्ते सम्पदोऽखिलाः ॥ 245

पूतो यो बिल्ववृक्षाधः शैवं यदि मनुं जपेत् ।
तदा स गुरुसम्प्राप्तमन्त्रसिद्धिं च विन्दति ॥ 246

अस्यापि जनकः शुद्धो महाशैवोत्तमो यतः ।
ततस्तदुपदिष्टश्च मन्त्रोऽस्य सफलो ध्रुवम् ॥ 247

ज्वलज्ज्वलनसङ्काशं पश्य शैवोत्तमार्भकम् ।
उद्धूलनत्रिपुण्ड्राभ्यां रुद्राक्षैरपि भूषितम् ॥ 248

रुद्राक्षकङ्कणः साम्बं लिङ्गरूपिणम द्वयम् ।
अभ्यर्चयति पश्यामुं बिल्वपत्रैरखण्डितैः ॥ 249

आब्रह्मकल्पमेतस्य मृत्युर्नैव भविष्यति ।
सिद्धमृत्युञ्जयमनोरस्य स्यान्मरणं कथम् ॥ 250

यस्य मृत्युञ्जयः सिद्धः स च मृत्युञ्जयः स्वयम् ।
तस्य दूरतरो मृत्युर्ध्यायतः किमुतापरे ॥ 251

मृत्युञ्जयति यो देवः स तु मृत्युञ्जयः स्मृतः ।
स तु शङ्कर एव स्यादनन्यसदृशो ध्रुवम् ॥ 252

ये तु मृत्युञ्जयं नित्यं पूजयन्ति जपन्ति च ।
तेषां मृत्युभयं नास्ति सत्यं सत्यं न संशयः ॥ 253

अयं शिवैकशरणः श्रीमृत्युञ्जयजापकः ।
कथं मृत्युवशं गच्छेदतिमृत्युरयं ध्रुवम् ॥ 254

बालोऽपि बलवानेष मृत्युञ्जयजपार्चनात् ।
अतो धिक्करणं चास्य मया कर्तुं न शक्यते ॥ 255

मृत्युञ्जयमुपाश्रित्य यो धिक्कर्तुं न शक्यते ।
स किं शासयितुं शक्यो मृत्युञ्जयपरायणः ॥ 256

यं मृत्युञ्जयमाश्रित्य स्थितोऽन्यैः पूज्यते सदा ।
स किं स्प्रष्टुं त्वया शक्यो मृत्युञ्जयपदानुगः ॥ 257

सर्वथा न वशं यास्यत्ययं ते धर्मनन्दन ।
याहि याहि स्वनिलयं यम नात्र प्रयोजनम् ॥ 258

विष्णुरुवाच -

इत्युदीरितमाकर्ण्य मृत्युस्तद्वचनं तदा ।
तथ्यमुक्तमिति ज्ञात्वा खिन्नः स्वनिलयं ययौ ॥ 259

ततस्तज्जननी पुत्रं जितमृत्युं समीक्ष्य सा ।
आनन्दं परमं प्राप विलोक्य हितमर्भकम् ॥ 260

ततः सा हर्षमापन्ना प्रमोदाश्रुपरिप्लुता ।
मृत एवायमधुना पुनर्जीवितवानिति ॥ 261

ततस्तत्तनयोऽप्येष तुष्टो बिल्वैर्महेश्वरम् ।
संपूज्य स पुनः स्तोत्रं चकाराघविनाशकम् ॥ 262

मेधाव्युवाच -

जय विश्वोत्तम श्रीमन् जय भक्तजनप्रिय ।
जय शैवोत्तमाराध्य जय पञ्चमुखानघ ॥ 263

जय निष्कल कामारे जय निर्मल निर्गुण ।
जय शान्त महादेव जय शङ्कर शाश्वत ॥ 264

जय भस्मोद्धूलिताङ्ग जय रुद्राक्षभूषण ।
जय शम्भो सुराधीश जय सर्वामरार्चित ॥ 265

जय भानुगुणाकार जय चन्द्रकलाधर ।
जयानेकगुणाकार जयानेकगुणाश्रय ॥ 266

जय पुण्यैकनिलय जय लिङ्गार्चनप्रिय ।
जय भक्तैकमन्दार जय बिल्वदलप्रिय ॥ 267

जय यज्ञफलाकार जय यज्ञफलप्रद ।
जय श्रीमङ्गलाकार जय श्रीमङ्गलप्रद ॥ 268

जयोग्र जय पापारे जय भूतेश्वर प्रभो ।
जय भीम भवावेद्य भयवैद्याऽभयप्रद ॥ 269

जय श्रीकण्ठ सर्वज्ञ जय सर्पविभूषण ।
जय मण्डितसर्वाङ्ग जय भक्तार्तिभञ्जन । 270

जय भर्ग महेशान जय सर्वशिवप्रिय ।
जय ब्रह्मादिवन्द्याङ्घ्रे जय ब्रह्मादिपूजित ॥ 271

जय श्रीविष्णुनेत्राब्जपूजिताङ्घ्रिसरोरुह ।
जय मृत्युञ्जयानन्त जय मृत्युहराव्यय ॥ 272

जय गौरीपते ब्रह्मन् जय शङ्कर शाश्वत ।
जय विश्वैकवन्द्याङ्घ्रे जय शूलवरप्रिय ॥ 273

जय मन्मथकालाग्ने जय कालहरानघ ।
जय पिङ्गजटाजूट जय भस्मविभूषण ॥ 274

जय त्रिलोचनामेय जयाहिकृतकङ्कण ।
जय कल्याणनिलय जय कल्याणदायक ॥ 275

जय शैवजनाधार जय शैवजनप्रिय ।
जयोज्ज्वलल्ललाटाक्ष जय श्रीवृषभध्वज ॥ 276

जय चिद्घन चिद्रूप जय देवशिखामणे ।
जय कर्पूरगौराङ्ग जय शाश्वत सर्वग ॥ 277

जय सर्वकराशास्य जय स्थितिकराश्रय ।
जयाप्रधृष्य निर्लिप्त निरञ्जन निरामय ॥ 278

जयाऽखण्डमयाकार जय श्रीचन्द्रशेखर ।
जय वेदान्तवेद्येश जय मङ्गलविग्रह ॥ 279

जयामितप्रभावाढ्य जयागण्यगुणालय ।
जय सर्वागमस्तव्य जय सर्वागमप्रिय ॥ 280

जय रुद्र जयोमेश जयोत्कृष्ट जयेश्वर ।
जयासङ्ग जयाराध्य जय सर्वोत्तमोत्तम ॥ 281

जयानाथैकशरण शरण्यपदपङ्कज ।
जय पञ्चाक्षराकार जय पञ्चाक्षरप्रिय ॥ 282

जय गौरीप्रियानन्त जयपूर्णमणोरथ ।
जयोङ्कारमयाकल्प जय सर्वात्मक प्रभो ॥ 283

जय कुन्देन्दुधवल जय ब्रह्मपितामह ।
जय षण्मुखनन्दीशगणनाथादिसेवित ॥ 284

जय चिन्मय चिन्मूर्ते जयानन्दमयादिम ।
जय निर्मम निर्द्वन्द्व निरीह निरुपाधिक ॥ 285

प्रसीद प्रसीद प्रभो चन्द्रमौले
प्रसीद प्रसीद प्रभो मन्मथारे ।
प्रसीद प्रसीद प्रभो शूलपाणे
प्रसीद प्रसीद प्रभो मृत्युमृत्यो ॥ 286

प्रसीद प्रसीद प्रभोऽनाथबन्धो
प्रसीद प्रसीद प्रभो पुण्यसिन्धो ।
प्रसीद प्रसीद प्रभो दिव्यबन्धो
प्रसीद प्रसीद प्रभो विश्वहेतो ॥ 287

श्रीविष्णुरुवाच -

इति स्तुत्वा महादेवं पुनः सम्पूज्य सादरम् ।
प्रणम्य भक्तिभावेन ननर्त स्वैरमादरात् ॥ 288

ततः शिवमभिस्पृश्य समालिङ्ग्य मनुं जपन् ।
मत्वा कृतार्थमात्मानं ध्याननिष्ठोऽभवद् दृढम् ॥ 289

ततो माध्याह्निकीं पूजां कृत्वा बिल्वदलादिभिः ।
स्तुत्वा प्रणम्य बहुधा पुनः सन्तर्प्य शङ्करम् ॥ 290

पूजां समाप्य पूतात्मा लिङ्गमादाय मृण्मयम् ।
जले सङ्क्षेपयामास सबिल्वदलमर्भकः ॥ 291

ततो मातरमालोक्य प्रणम्य चरणौ स्पृशन् ।
तया सह गृहं प्राप शिवध्यानपरायणः ॥ 292

ततो ददर्श जनकं शिवपूजैकमानसम् ।
त्रिपुण्ड्रविलसत्फालं महाभागमकल्मषम् ॥ 293

रुद्राक्षमालावलयालङ्कृतं वेदवित्तमम् ।
विदिताखिलवेदाङ्गं जपन्तं मनुमुत्तमम् ॥ 294

ततः स वीक्ष्य तनयं विनयानतकन्धरम् ।
सद्यो निजाङ्कमारोप्य मूर्ध्न्युपाघ्राय सादरम् ॥ 295

प्रेमाश्रुपूर्णनेत्रः सन्नालिलिङ्ग भृशंमुहुः ।
इदमुक्तं मया ब्रह्मन्कौतुकार्थमिहाधुना ॥ 296

केन वा ज्ञायते देव देवपूजाविधेः फलम् ।
अतो यत्नेन महता श्रीमहादेवपूजनम् ॥ 297

कर्तव्यमनिशं ब्रह्मन्सर्वसिध्येककारणम् ।
सर्वकामाश्रयो यस्मान्महादेवस्ततः शिवः ।। 298

पूजितः कामितानर्थान्वितरत्येव शङ्करः ।
यदि कामेश्वरः कामान्पूजितो न प्रयच्छति ।। 299

तदा कामप्रदः कोऽन्वस्ति(?) बभूवोत भविष्यति ।
अतः सर्वात्मना सर्वं परित्यज्य प्रयत्नतः ।। 300

पूजय त्वं महादेवं सर्वाभीष्टप्रदाक ।
विधे विना प्रयासेन पत्रेणाप्यर्चितः शिवः ।। 301

ददाति परमामृद्धिमनल्पां प्रीतिपूर्वकम्।
महेशपूजया ब्रह्मन् पापं सर्वं प्रणश्यति ।। 302

शिवार्चनसमं पुण्यं नैव त्रिजगतीतले ।
ततः सर्वं परित्यज्य पूजयामः सदाशिवम् ।। 303

शङ्करं शरणं यामो भक्ताभीष्टप्रदायकम् ।
भवदागमनं ब्रह्मन् ज्ञातमेव मयाधुना ।। 304

त्वया किमर्थमिन्द्रस्य मोहोऽयं न निवारितः ।
कश्चिन्मामीश्वरं मत्वा भ्रमान्मुनिकुमारकः ।। 305

तपःकरोति मूढात्मा सालग्रामशिलातले ।
तत्र यामो वयं ब्रह्मन् सर्वैर्देवगणैः सह ।। 306

निवर्तनीयस्तपसो मामुद्दिश्य कृताद्बलात् ।

**श्रीशिव उवाच -**

इत्युक्त्वेन्द्रादिभिः साकं सालग्रामशिलास्थलम् ॥ 307

प्राप विष्णुःसलक्ष्मीको गरुडासनसंस्थितः ।
ददर्श स महाविष्णुं ब्रह्मेन्द्रादिसमन्वितम् ॥ 308

ततः प्रणम्य बहुधा स्तुत्वा स्तोत्रैरुपस्थितः ।
स ययाचे वरं देव मोक्षं देहि जनार्दन ॥ 309

ततो विष्णुरुवाचेदं वचनं सार्थकं मुनिम् ।
त्वया घोरं तपस्तप्तं मामुद्दिश्य वृथा श्रमात् ॥ 310

मोक्षदाने न शक्तोऽहं सर्वथा मुनिपुङ्गव ।
स्वर्गापवर्गलाभाय सृष्टिस्थित्यन्तकारणम् ॥ 311

शरणं व्रज देवेशं महादेवं महेश्वरम् ।
मोक्षप्रदाता भगवान् देवदेवोत्तमः शिवः ॥ 312

मामर्चयन्ति बहवः शिवमायाविमोहिताः ।
शुक्तिः किं भविता क्वापि रजतं मुनिपुङ्गव ॥ 313

तथाहमीश्वरत्वेन ज्ञातश्चेदीश्वरोऽस्मि किम् ।
ईशानः सर्वविद्यानां भूतानां चेश्वरः शिवः ॥ 314

विज्ञातो न तदन्यस्तु नेश्वरो विद्धि साम्प्रतम् ।
इति विष्णुवचः श्रुत्वा बभाषे वचनं द्विजः ॥ 315

मम वैकुण्ठवासो वा दीयतां भक्तवत्सल ।
ततो विष्णुरुवाचेदं वचनं सुरसन्निधौ ॥ 316

विप्र वैकुण्ठवासोऽपि मया दातुं न शक्यते ।
मम वैकुण्ठलाभोऽपि प्राप्तः शङ्करपूजनात् ॥ 317

स्वेच्छधिकारो नैवास्ति शिवाज्ञामतिलङ्घ्य मे ।
न शिवाज्ञां विना तत्र वासस्ते सुलभो भवेन् ॥ 318

न वैकुण्ठे तवावासः विना शङ्करपूजया ।
स्वतन्त्रः फलदाता तु शिव एव न संशयः ॥ 319

स सम्यक्पूजितश्चेत्स्यात्तवाभीष्टं प्रयच्छति ।
अस्वतन्त्रा वयं सर्वे वरदानेऽब्जजादयः ॥ 320

अतोऽहं स्वल्पमपि ते न दास्ये फलमीप्सितम् ।
तत्फलं दत्तमपि ते नोपभोगाय कल्पते ॥ 321

मामुद्दिश्य तपश्चर्या या कृतास्ति त्वयाद्विज ।
मत्कृतोपद्रवः कोऽपि न भविष्यति ते ध्रुवम् ॥ 322

नाहं तत्प्रतिबध्नीयां शिवो यत्ते प्रदास्यति ।
तुभ्यं मयापि साहाय्यं कार्यं शक्त्यनुरोधतः ॥ 323

यजस्वाभीष्टसिध्यर्थं देवदेवोत्तमं शिवम् ।
शिवं पूजय यत्नेन त्यक्त्वाऽऽलस्यमहर्निशम् ॥ 324

प्रयच्छति महादेवः पूजितोऽभीष्टमन्वहम् ।
सन्तुष्टश्चेन्महादेवस्तस्यादेयं न किञ्चन ॥ 325

ददाति मोक्षपर्यन्तं फलं चेत्पूजितः शिवः ।
पश्य मां भस्मलिप्ताङ्गं रुद्राक्षाभरणान्वितम् ॥ 326

लिङ्गपूजापरं नित्यं शिवपञ्चाक्षरोत्सुकम् ।
पश्येमान्विधिमुख्यांश्च शिवनामजपोत्सुकान् ॥ 327

देवर्षियक्षगन्धर्वैः किन्नरैरुरगैरपि ।
पूजनीयः प्रयत्नेन शिव एवेष्टसिद्धये ॥ 328

ततस्त्वमतियत्नेन कुरु शङ्करपूजनम् ।
शिवपूजाप्रभावेण मोक्षश्रीः सुलभा तव ॥ 329

किमशक्तं समुद्दिश्य मां करोषि तपो महत् ।
त्रिपुण्ड्रधारणं कृत्वा भस्मोद्धूलनपूर्वकम् ॥ 330

रुद्राक्षधारणं कृत्वा यज देवोत्तमं शिवम् ।
विभूतिधारणं त्यक्त्वा विना रुद्राक्षधारणम् ॥ 331

मा मा पूजय विश्वेशं लिङ्गाकारमनुत्तमम् ।

शिव उवाच -

इत्युक्त्वेन्द्रादिभिः साकं विष्णुर्विधिसमन्वितः ॥ 332

वैकुण्ठं प्राप विमलमारुह्य गरुडं मुदा ।
अतो मदर्चनादेव मुक्तिः प्राप्या सुदुर्लभा ॥ 333

विना मदर्चनं मोक्षो न भवेद्देव्यसंशयम् ।
पूजितोऽहं महादेवो यस्य यद्यदभीप्सितम् ॥ 334

तत्तद्दास्यामि सुभगे सत्यं सत्यं न संशयः ।
देवतासार्वभौमोऽहं भुक्तिमुक्तिप्रदायकः ॥ 335

सर्वाधारं सर्वलोकैकबन्धुं
सर्वाशास्यं वेदवेदान्तवेद्यम् ।
सर्वातीतं सर्वमोक्षैकहेतुं
विज्ञायेशं मां अनन्याः भजन्ति ॥ 336

॥ इति श्रीशिवरहस्ये सप्तमांशे शिवगौरीसंवादे

षोडशोऽध्यायः ॥

※

## ॥ सप्तदशोऽध्यायः ॥

श्रीशिव उवाच -

अथातः सम्प्रवक्ष्यामि पूजोपकरणं शिवे ।
आधिकार्यपि पूजायामुच्यते शृणु सादरम् ॥ 1

ब्रह्मक्षत्रियविट्छूद्रदेवगन्धर्वमानवाः ।
यक्षादयोऽपीष्टसिद्धयै मामीशं पूजयन्ति हि ॥ 2

ब्राह्मणैर्देवमुनिभिर्देवैश्चाहरहः शिवे ।
वेदमन्त्रैरहं पूज्यस्तदन्यैस्तन्त्रमार्गतः ॥ 3

आदौ मत्पूजनात्पूर्वं यत्कर्तव्यं तदुच्यते ।
कर्तव्यकरणाभावे नाधिकारी भविष्यति ॥ 4

प्रातः शौचादिकं कृत्वा स्नानं कार्यं प्रयत्नतः ।
रुद्रसूक्तैर्मार्जनं च कर्तव्यं स्नानतत्परैः ॥ 5

जले निमज्ज्य मामीशं ध्यात्वा साम्बं महेश्वरम् ।
महादेवेति मन्त्रोऽयं जपनीयोऽष्टशः शिवे ॥ 6

ततः प्रयत्नतो देवि कर्तव्यं जलतर्पणम् ।
परिधानं ततः कार्यं वस्त्रचीरादिभिः शिवे ॥ 7

तदनन्तरमाचम्य भस्म ग्राह्यं प्रयत्नतः ।
सद्योजातादिभिर्भस्म ततः समभिमन्त्रयेत् ।। 8

ततः शरीरं सर्वाङ्गं भस्मनोद्धूलयेत्ततः ।
त्रिपुण्ड्रधारणं कृत्वा जावालोपनिषत्क्रमात् ।। 9

रुद्राक्षधारणं कार्यं ततोऽङ्गेषु यथाक्रमम् ।
ततः सन्ध्या प्रयत्नेन कर्तव्या सकुशाम्भसा ।। 10

गोमयेन भुवं सम्यगनुलिप्योत्क्षिप्पेज्जलम् ।
कुशासनोपविष्टः सन्पूजाद्रव्याणि साधयेत् ।। 11

अष्टौ पात्राणि सङ्ग्राह्याण्यर्घ्यार्थमतिशोभिते ।। 12

तानि सम्प्रोक्ष्य सकुशं जलं तेषु प्रपूरयेत् ।
पूजयित्वा ततो मन्त्री शुद्धशैवं जपेत्ततः ।। 13

सौवर्णं राजतं ताम्रमथवा मृण्मयं शिवे ।
शिवलिङ्गाभिषेकाय पात्रं ग्राह्यं प्रयत्नतः ।। 14

विल्वपत्राणि तत्पात्रे स्थापनीयानि यत्नतः ।
तदुपर्येव संस्थाप्यं शिवलिङ्गं प्रयत्नतः ।। 15

ततो रौद्रेण मन्त्रेण संप्रोक्ष्यार्चनसाधनम् ।
भस्मनाङ्गानि सम्मृज्य सङ्कल्पं च समाचरेत् ।। 16

ततः कुन्देन्दुधवलं मामुमारमणं शिवम् ।
ध्यात्वा नमः शिवायेति मन्त्रेण समुपस्पृशेत् ।। 17

जलकुम्भं भस्मपूतं स्पृष्ट्वा मूलमनुं पठेत् ।
मूलमन्त्रस्तु सर्वत्र शिवपञ्चाक्षरः स्मृतः ।। 18

पठनीयोऽन्यमन्त्रान्ते मूलमन्त्रस्तु सर्वतः ।
मूलमन्त्रोपमन्त्रास्तु सर्वमन्त्रा यतः स्मृताः ।। 19

सुगन्धिजलमीशान! पवित्र कलशाहृतम् ।
अभिषेकार्थममलमर्घ्यार्थं च महेश्वर ।। 20

इत्युक्त्वा शङ्करं ध्यात्वा सर्वदेवशिखामणिम् ।
पञ्चाक्षरजपः कार्यो दशवारं प्रयत्नतः ।। 21

ततोऽष्टमूर्तये मह्यमर्घ्याण्यपि निवेदयेत् ।
अर्घ्यमन्त्राश्च विविधास्तेऽप्युक्ते मयाधुना ।। 22

पृथिवीविश्वरूपेश पृथिवीजनक प्रभो ।
गृहाणार्घ्यमिदं शम्भो प्रसीद सुरसत्तम ।। 23

जलरूप महादेव जलप्रभवकारण ।
गृहाणार्घ्यमिदं .... .... ।। 24

तेजोरूप महेशान तेजोजनक शङ्कर ।
गृहाणार्घ्यमिदं .... .... ।। 25

वायुस्वरूप मायात्मन्वायुप्रभवकारण ।
गृहाणार्घ्यमिदं ... .... ॥ 26

आकाशरूप सर्वेश व्योमोत्पत्त्येककारण ।
गृहाणार्घ्यमिदं .... .... ॥ 27

सूर्यस्वरूप सूर्येश शिव सूर्यैककारण ।
गृहाणार्घ्यमिदं .... .... ॥ 28

चन्द्रस्वरूप चन्द्रात्मंश्चन्द्रशेखर सर्वग ।
गृहाणार्घ्यमिदं .... .... ॥ 29

यज्वमूर्ते जगन्मूर्ते यज्ञकर्मफलप्रद ।
गृहाणार्घ्यमिदं .... .... ॥ 30

अष्टावर्घ्याणि देयानि मन्त्रैरेतैर्यथाक्रमम् ।
श्वेतशाल्यक्षताप्लुष्टबिल्वपत्रयुतैर्जलैः ॥ 31

ततः पञ्चामृतैः शुद्धैरभिषेकं समाचरेत् ।
पञ्चामृतस्नानमध्ये जलस्नानं समाचरेत् ॥ 32

क्षीरं गव्यमिदं शुद्धं जलसंयुतमीश्वर ।
अभिषेकार्थमानीतं गृहाणेदं महेश्वर ॥ 33

दधिगव्यमिदं शुद्धं परिष्कृतमुमापते ।
अभिषेकार्थं .... .... ॥ 34

घृतमेतन्महादेव सुगन्धं गव्यमुत्तमम् ।
अभिषेकार्थं .... .... ॥ 35

नवं मधु समानीतमिदं कीटाद्यदूषितम् ।
अभिषेकार्थमानीतं .... .... ॥ 36

शर्करेयं समानीता सीताकीटाप्रदूषिता ।
अभिषेकार्थमानीता गृहाणेमां महेश्वर ॥ 37

एवं पञ्चामृतैरीशमभिषिच्य ततः परम् ।
साङ्गेन नमकेनेशं साङ्गं मामभिषेचयेत् ॥ 38

जलधारामविच्छिन्नां भक्त्या सम्पादयेदपि ।
सा धाराऽमृतधारा सा मुक्तिधारा मम प्रिया ॥ 39

ततस्तु: कल्पनीयं वै विल्वपत्रोत्तरासनम् ।
हेमादिनिर्मितं दिव्यं मूलमन्त्रेण भक्तितः ॥ 40

ततो नवेन शुद्धेन वस्त्रेण परिवृत्य माम् ।
सितेन भस्मना सम्यगर्चयेन्मूलमन्त्रतः ॥ 41

चन्दनेन सुगन्धेन मूलमन्त्रेण पूजयेत् ।
मध्ये त्वेकैकपूजान्ते देयमाचमनं मम ॥ 42

ततः शाल्यक्षतैःश्वेतैरर्चयेन्मां तिलान्वितैः ।
ततो बिल्वदलैः शुद्धैरर्चयेदघनाशकैः ॥ 43

बिल्वपत्रं गृहाणेश बिल्वपत्रप्रिय प्रभो ।
प्रसीद भगवन् शम्भो पातकानि हरस्व मे ॥ 44

अमुं मन्त्रं समुच्चार्य मूलमन्त्रमपि प्रिये ।
बिल्वपत्रैः समभ्यर्च्य पुष्पैरपि समर्चयेत् ॥ 45

साज्येनागरुसारेण सुगन्धेन महेश्वरि ।
धूपस्ततः कल्पनीयो मह्यं यत्नपुरःसरम् ॥ 46

धूपं गृहाण देवेश सुगन्धं सघृतं शिव ।
पातकानि हरस्वेश धूपदानेन सादरम् ॥ 47

दीपं गृहाण देवेश पातकध्वान्तनाशक ।
प्रसीद पार्वतीनाथ दीनबन्धो दयानिधे ॥ 48

इति दत्त्वा धूपदीपौ नैवेद्यं परिकल्पयेत् ।
ततः परं कल्पनीयं करोद्वर्तनमादरात् ॥ 49

ततः परं धूपदीपौ ताम्बूलं च ततः परम् ।
ततः पुनर्दीपदा देयावत्यन्तभक्तितः ॥ 50

गृहाण परमेशान ताम्बूलमिदमुत्तमम् ।
एलालवङ्गकर्पूरपरिष्कृतमुमापते ॥ 51

ततः प्रदक्षिणा कार्या द्वादशैकादशाथवा ।
ततः प्रणामाः कर्तव्या एकविंशतिसङ्ख्यया ॥ 52

नर्तनं च ततः कार्यं साम्बध्यानपुरस्सरम् ।
शिवपञ्चाक्षरः शुद्धो जपनीयः प्रयत्नतः ॥ 53

अष्टोत्तरसहस्रं तु न्यासध्यानपुरःसरम् ।
शिवपञ्चाक्षरो जप्यो यद्वा न्यासादिकं विना ॥ 54

ततः परं त्रिल्वपत्रैः पुष्पैर्नानाविधैरपि ।
पुनः पूजा प्रयत्नेन कर्तव्या मह्यमादरात् ॥ 55

ततो नानाविधैः स्तोत्रैः स्तोतव्योऽहं प्रयत्नतः ।
ततश्छत्रं चामरं च दर्पणं च निवेदयेत् ॥ 56

पुनर्नत्वा क्षमस्वेति संस्पृशेद्धचानपूर्वकम् ।
स्पर्शं कृत्वा पुनर्मन्त्रममुमेव पठेच्छिवे ॥ 57

अयं मे इति मन्त्रेण स्पृष्ट्वा हस्ततलेन माम् ।
अष्टोत्तरशतं मन्त्रो जपनीयः षडक्षरः ॥ 58

एवं पूजाऽन्वहं कार्या त्रिषु लोकेषु सादरम् ।
नित्यपूजेयममले भुक्तिमुक्तिफलप्रदा ॥ 59

प्रातः सन्ध्यां विधायादौ पूजनीयोऽन्वहं शिवे ।
कार्यमन्यन्न कर्तव्यं मामनभ्यर्च्य सादरम् ॥ 60

एवं प्रयत्नतः कार्यं शक्तेन मम पूजने ।
यथाकथञ्चित् कर्तव्यमशक्तेनापि सर्वथा ॥ 61

न पेयं जलमप्यादौ मामनभ्यर्च्य सर्वथा ।
पिबेद्यदि प्रमादेन कश्चित्पूर्वं शिवार्चनात् ॥ 62

मरुस्थले भ्रमेदेष पानीयान्नविवर्जिते ।
असत्कुलप्रसूतानामभागानां दुरात्मनाम् ॥ 63

नित्यं मदर्चने श्रद्धा कलौ तु न भविष्यति ।
अन्यमार्गरता दुष्टा वेदमार्गविवर्जिताः ॥ 64

द्विजाः कलौ भविष्यन्ति शिवपूजापराङ्मुखाः ।
शिवमर्च्यमनर्च्यान्यमनर्च्यं योऽर्चयिष्यति ॥ 65

स पञ्चपातकी ज्ञेयो वेदमार्गबहिष्कृतः ।
अर्च्योऽहमेव सर्वेषु देवेष्वहरहोऽप्यतः ॥ 66

ततोऽर्च्यस्य महेशस्य पूजा कार्या ममैव हि ।
मदर्चनपरो नित्यं यस्त्रिकालं भविष्यति ॥ 67

तमूर्ध्वं नेतुमिच्छामि प्रतिज्ञेयं मम प्रिये ।
भस्मोद्धूलनसंसक्तो यस्त्रिकालं भविष्यति ॥ 68

तमूर्ध्वं नेतुमिच्छामि प्रतिज्ञेयं मम प्रिये ।
त्रिपुण्ड्रधारणासक्तो यस्त्रिकालं भविष्यति ॥ 69

तमूर्ध्वं नेतु .... .... ।
पञ्चाक्षरजपासक्तो यस्त्रिकालं भविष्यति ॥ 70

तमूर्ध्वं .... .... ।
मदेकशरणो नित्यं यो मामभ्यर्चयिष्यति ॥ 71

तमूर्ध्वं नेतु .... .... ।
मत्कथाश्रवणासक्तो मन्मना यो भविष्यति ॥ 72

तमूर्ध्वं नेतुमिच्छामि .... ।
मद्भक्तया सन्ततं युक्तो यो मद्याजी भविष्यति ॥ 73

तमूर्ध्वं .... .... ।
मामेव सततं ध्यात्वा यस्तु हृष्टो भविष्यति ॥ 74

तमूर्ध्वं .... .... ।
रुद्राध्यायेन सततं यो मां संस्नापयिष्यति ॥ 75

तमूर्ध्वं .... .... ।
बिल्वपत्रैस्त्रिशाखैर्मां यो नित्यं पूजयिष्यति ॥ 76

तमूर्ध्वं नेतु .... .... ।
अर्चयिष्यति यो नित्यमखण्डैः शालित्तण्डुलैः ॥ 77

तमूर्ध्वं .... .... ।
यस्तु नित्यं तिलैः कृष्णैः श्वेतैर्वा पूजयिष्यति ॥ 78

तमूर्ध्वं .... .... ।
यवैर्यः सततं भक्तया पूजयिष्यति मामजम् ॥ 77

तमूर्ध्वं .... .... ।
गोधूमैर्वैणकैर्माषैर्यो मामभ्यर्चयिष्यति ॥ 80

तमूर्ध्वं .... .... ।
असितैर्वा सितैर्वा मां सिद्धार्थैर्योऽर्चयिष्यति ॥ 81

तमूर्ध्वं .... .... ।
नीवारतण्डुलैः साग्रैर्योमामभ्यर्चयिष्यति ॥ 82

तमूर्ध्वं .... .... ।
श्यामाकतण्डुलैर्नित्यं यो मामभ्यर्चयिष्यति ॥ 83

तमूर्ध्वं .... .... ।
विविधैर्मल्लिकापुष्पैर्यो मामभ्यर्च .... ॥ 84

तमूर्ध्वं नेतुमिच्छामि .... .... ।
प्रियङ्गुतण्डुलैर्नित्यं यो मामभ्यर्चयिष्यति ॥ 85

तमूर्ध्वं .... .... ।
रत्नैर्मुक्ताफलैर्यो मां शिवमभ्यर्चयिष्यति ॥ 86

तमूर्ध्वं .... .... ।
नित्यं सुवर्णपुष्पैर्मां योऽर्चयिष्यति भक्तितः ॥ 87

तमूर्ध्वं .... .... ।
नित्यं चम्पकपुष्पैर्मां योऽर्चयिष्यति सादरम् ॥ 88

तमूर्ध्वं .... .... ।
नित्यं कुशेशयैर्यो मां शिवमभ्यर्चयिष्यति ।। 89

तमूर्ध्वं .... .... ।
कमलैरमलैर्भक्त्या यो मामभ्यर्चयिष्यति ।। 90

तमूर्ध्वं नेतु ... ... ... ।
नीलोत्पलैः पुण्डरीकैर्यो मामभ्यर्चयिष्यति ।। 91

तमूर्ध्वं ... ... ... ।
कल्हारैः परया भक्त्या यो मामभ्यर्चयिष्यति ।। 92

तमूर्ध्वं ... ... ... ।
पुन्नागैः सततं भक्त्या यो मामभ्यर्चयिष्यति ।। 93

तमूर्ध्वं ... ... ... ।
शतपत्रैरनर्घ्यैर्मां योऽर्चयिष्यति सादरम् ।। 94

तमूर्ध्वं ... ... ... ।
कदम्बपुष्पैरमलैर्यो मामभ्यर्चयिष्यति ।। 95

तमूर्ध्वं ... ... ... ।
नागचम्पकपुष्पैर्मां योऽर्चयिष्यति सादरम् ।। 96

तमूर्ध्वं ... ... ... ।
सितासितैः पारिजातैः यो मामभ्यर्चयिष्यति । 97

तमूर्ध्वं ... ... ... ।
अर्चयिष्यति मां यस्तु करवीरैः सितासितैः ॥ 98

तमूर्ध्वं ... ... ... ।
धुत्तूरकुसुमैः शुद्धैर्योऽर्चयिष्यति मां विभुम् ॥ 99

तमूर्ध्वं ... ... ... ।
विविधैरर्कपुष्पैर्मां योऽर्चयिष्यति भक्तितः ॥ 100

तमूर्ध्वं ... ... ... ।
द्रोणपुष्पैः शमीपुष्पैर्योऽर्चयिष्यति सादरम् ॥ 101

तमूर्ध्वं ... ... ... ।
यस्तु दाडिमपुष्पैर्मां साम्बमभ्यर्चयिष्यति ॥ 102

तमूर्ध्वं ... ... ... ।
नित्यमर्जुनपुष्पैर्मां योऽर्चयिष्यति सादरम् ॥ 103

तमूर्ध्वं ... ... ... ।
यस्तु कन्दलपुष्पैर्मामर्चयिष्यति सादरम् ॥ 104

तमूर्ध्वं ... ... ... ।
यो विष्णुक्रान्तकुसुमैर्नित्यमभ्यर्चयिष्यति ॥ 105

तमूर्ध्वं ... ... ... ।
यो नित्यं वृहतीपुष्पैर्मामीशं पूजयिष्यति ॥ 106

तमूर्ध्वं ... ... ... ॥.

जम्बूपुष्पैराम्रपुष्पैर्यो मामभ्यर्चयिष्यति । 107

तमूर्ध्वं ... ... ... ।

यस्तु वेतसपुष्पैर्मां सादरं पूजयिष्यति ॥ 108

तमूर्ध्वं ... ... ... ।

कुशपुष्पैः काशपुष्पैर्यो मामभ्यर्चयिष्यति ॥ 109

तमूर्ध्वं .... .... .... ।

बन्धूकपुष्पैरमलैर्योमामभ्यर्चयिष्यति ॥ 110

तमूर्ध्वं ... ... ... ।

पलाशपुष्पैरमलैर्योऽर्चयिष्यति सादरम् ॥ 111

तमुर्ध्वं नेतुमिच्छामि प्रतिज्ञेयं मम प्रिये ।

यो लोध्रपुष्पैरमलैरर्चयिष्यति मामजम् ॥ 112

तमूर्ध्वं ... ... ... ।

जम्ब्वाम्रतुलसीपत्रैर्योऽर्चयिष्यति सादरम् ॥ 113

तमूर्ध्वं ... ... ... ।

नारिकेलफलैर्यस्तु मामर्चयति सादरम् ॥ 114

तमूर्ध्वं ... ... ... ।

पूजयिष्यति यो भक्त्या नित्यं दमनकेन माम् ॥ 115

तमूर्ध्वं ... ... ... ।
पूजयिष्यति मां यस्तु जम्ब्वाम्रबदरीफलैः ।। 116

तमूर्ध्वं नेतुमिच्छामि ... ... ... ।
यो मां द्राक्षाफलैरीशमर्चयिष्यति सादरम् ।। 117

तमूर्ध्वं ... ... ... ।
पूजयिष्यति यो भक्त्या मां पक्वैः कदलीफलैः ।। 118

तमूर्ध्वं ... ... ... ।
पक्वैश्च दाडिमैः शुद्धैर्योऽर्चयिष्यति सादरम् ।। 119

तमूर्ध्वं ... ... ... ।
दूर्वाऽपामार्गदर्भैर्मां भक्त्या योऽभ्यर्चयिष्यति ।। 120

तमूर्ध्वं ... ... ... ।
भृङ्गराजशमीपत्रैर्यो मामभ्यर्चयिष्यति ।। 121

तमूर्ध्वं ... ... ... ।
मदालये दीपमालां यस्तु नित्यं करिष्यति ।। 122

तमूर्ध्वं ... ... ... ।
कर्पूरदीपदो यस्तु मह्यं भक्त्या भविष्यति ।। 123

तमूर्ध्वं नेतु .... .... .... ।
साज्यगुग्गुलुधूपेन यो मां सन्धूपयिष्यति ।। 124

तमूर्ध्वं .... .... .... ।
यः साज्यागरुधूपेन नित्यं मां धूपयिष्यति ॥ 125

आर्यावर्ते पुरा कश्चिद् ब्राह्मणो वेदपारगः ।
भसितोद्धूलितवपुः त्रिपुण्ड्राङ्कितमस्तकः ॥ 126

रुद्राक्षमालाभरणो मां साम्बमजमीश्वरम् ।
सम्पूज्य विल्वपत्राद्यैरालोक्य मुदितः स्थितः ॥ 127

तदानीमागतः कश्चिन्मदन्यसुरपूजकः ।
मृद्भूषितललाटाङ्गो भ्रान्तो विप्रकुलोद्भवः ॥ 128

स वेदवित्तमो विप्रस्तं दृष्ट्वा मूढचेतसम् ।
धैर्यं कृत्वा कियत्कालं तृणपाणिरुवाच तम् ॥ 129

विप्र उवाच -

मृदाङ्कितललाटाङ्ग गच्छ दुर्मुख दूरतः ॥ 130

मा दर्शय मुखं मह्यं शिववञ्चितविग्रहम् ।
भस्माङ्क उत्तमः प्रोक्तो ललाटे वेदवादिभिः ॥ 131

तद्भस्मलेपनं त्यक्त्वा तत्कथं निन्दितं मुदा ।
त्रिपुण्ड्रभस्मनेत्यादिश्रुतिभिर्भस्मधारणम् ॥ 132

आवश्यकमिति प्रोक्तं तत्कथं न कृतं त्वया ।
त्वया "वेदमनूच्ये" ति श्रुतिर्न स्मर्यते कथम् ॥ 133

"सत्यं वद" त्यादिधर्मान्निरावधानेन संस्मर ।
अनुलिप्य मृदं फाले त्वया पापमुपार्जितम् ।। 134

श्रमेणापि कृतं कर्म पापायैवोपकल्पते ।
उद्धूलनं त्रिपुण्ड्रं च क्षणमात्रमपि द्विज ।। 135

न त्याज्यमेव न त्याज्यं न त्याज्यं सत्यमुच्यते ।
उद्धूलनं त्रिपुण्ड्रं च ब्राह्मणो यदि सन्त्यजेत् ।। 136

प्रवादादथवा मोहात्स याति नरकं ध्रुवं ।
सत्यत्यागेन विप्राणां ब्राह्मण्यप्रच्यवो ध्रुवम् ।। 137

यज्ञोपवीतत्यागेन ब्राह्मण्यप्रच्यवो ध्रुवम् ।
तथैव भस्मत्यागेन ब्राह्मण्यप्रच्यवो भवेत् ।। 138

स्वाध्यायाध्ययनाभावे ब्राह्मण्यप्रच्यवो यथा ।
तथैव भस्मत्यागेन ब्राह्मण्यप्रच्यवो ध्रुवम् ।। 139

मा दर्शय मुखं मह्यमूर्ध्वपुण्ड्रकलङ्कितम् ।
स्वयं नष्टोऽन्यनाशार्थमुद्योगं माकुरु द्विज ।। 140

त्रिपुण्ड्रधारणं कृत्वा प्रातः कार्यं शिवार्चनम् ।
तद्विहाय कथं भ्रान्त्या सञ्चारः क्रियते त्वया ।। 141

प्रातः शिवार्चनं कार्यं भस्मधारणपूर्वकम् ।
तस्मान्न प्रमदो भूयादिति वेदः स्मृतो न किम् ।। 142

त्रिसन्ध्यमपि सम्पूज्यं शिवलिङ्गमिति श्रुतिः ।
कथं न स्मर्यते मूर्ख भ्रान्तो जातः कथं वद ॥ 143

**शिव उवाच -**

इत्युक्तमादौ वचनं विप्रः श्रुत्वा ततः परम् ।
तं प्रणम्य जगादेवं कृताञ्जलिपुटः शिवे ॥ 144

**द्विज उवाच -**

इत्युक्त्वा तं द्विजं सम्यक् प्रणम्य च पुनः पुनः ।
स्नात्वा चकार विधिवत्प्रायश्चित्तमतन्द्रितः ॥ 145

ततो भस्मोद्धूलनादि सर्वं कृत्वा यथाविधि ।
शिवलिङ्गार्चनं चक्रे यथाविधि यथाक्रमम् ॥ 146

तदाप्रभृति वेदोक्तकर्माचरणतत्परः ।
उवासोद्धूलनादीनि सम्यक्कुर्वन्नतन्द्रितः ॥ 147

अतः प्रयत्नतः कार्यं विप्रैरुद्धूलनादिकम् ।
तत्त्यागे सर्वथा विप्रा भ्रष्टा ब्राह्मण्यतः शिवे ॥ 148

धर्मार्थकाममोक्षेच्छा येषां तेषां तु सर्वथा ।
शिवार्चनं प्रयत्नेन कर्तव्यं विधिपूर्वकम् ॥ 149

मदाराधनसंसक्ता ये मदेकपरायणाः ।
तेषां तु नरके वासो न भविष्यति सर्वथा ॥ 150

पुरा यमभटाः क्रूरा यमशासनकारिणः ।
सञ्चरन्तोऽवनीपृष्ठे सोत्साहं संस्थिताः शिवे ॥ 151

तदा कश्चिद्द्विजवरो मदर्चनपरायणः ।
उद्धूलनत्रिपुण्ड्राभ्यां रुद्राक्षैश्च विभूषितः ॥ 152

पञ्चाक्षरजपासक्तो मत्पूजानिरतः सदा ।
उवास बिल्वच्छायायां बिल्वपत्रार्चनप्रियः ॥ 153

तदा तं द्विजमालोक्य ब्राह्मणः कश्चिदागतः ।
ततस्तमभिवाद्येत्थं बभाषे वचनं द्विजः ॥ 154

द्विजोत्तम मया पूर्वं पातकं बहुधा कृतम् ।
इदानीमपि पापेभ्यो न निवृत्तं मनो मम ॥ 155

किञ्चिदूनं शतं जातं वत्सराणामपि द्विज ।
सर्वथा श्वः परश्वो वा मरणं मे भविष्यति ॥ 156

किञ्चित्स्वप्ने मया दृष्टं क्वचित्पूर्वदिने द्विज ।
तद्वक्ष्ये स्वप्नवृत्तान्तं श्रुत्वा सम्यग्द्विजोत्तम ॥ 157

नीलाद्रिसन्निभा दृष्टा यमदूता भयानकाः ।
अतः परं द्विजाधीश किं कर्तव्यं वदस्व मे ॥ 158

तदुक्तं तद्वचः श्रुत्वा तमुवाच द्विजोत्तमः ।
परदुःखप्रहाणेच्छुस्तत्त्वज्ञः शिवचिन्तकः ॥ 159

द्विज ते यदि मोक्षेच्छा तदा यत्नेन सादरम् ।
कुरु देवाधिदेवस्य पूजनं भक्तिपूर्वकम् ॥ 160

महादेवार्चनात्पुंसां विनश्यन्त्यघकोटयः ।
यत्पूजनाद्विनश्यन्ति पापानीत्यत्र नाद्भुतम् ॥ 161

शिवपूजनमात्रेण मुच्यते दुःखसागरात् ।
शिवपूजां विना मोक्षो न भविष्यति सर्वथा ॥ 162

सत्यमित्यादिवाक्यानि सन्ति वेदेषु भूरिशः ।
न सत्याचरणान्मोक्षो न त्यागैर्विविधैरपि ॥ 163

किन्तु मोक्षो महादेवपूजयैवेति हि श्रुतिः ।
धर्मार्थकाममोक्षस्तु शिवपूजाविधेः फलम् ॥ 164

ततः पूजय देवेशं महादेवमुमापतिम् ।
उद्धूलनादिकं कृत्वा जाबालोक्तविधानतः ॥ 165

इति तद्वचनं श्रुत्वा विश्वस्य द्विजपुङ्गवः ।
स्नात्वा कृत्वोद्धूलनादि चकार शिवपूजनम् ॥ 166

ततो नत्वा महादेवं सम्यक्कृत्वा च नर्तनम् ।
ततः प्राणान् जहौ मर्त्यः कुर्वन्नेव मदर्चनम् ॥ 167

अपास्य दुःखान्यखिलान्यतः स मदनुग्रहात् ।
मद्रूपमगमद्विप्रस्तन्मे पूजाविधेः फलम् ॥ 168

तदानीं द्विजसंवादं स्मृत्वा तु यमकिङ्कराः ।
प्राप्तं पुण्यफलं तच्च विलोक्यैवमुपाययुः ॥ 169

ततस्तं दूरतो नत्वा बिल्वार्चनपरं द्विजम् ।
किमयं पुरुषो मुक्त इति पप्रच्छुरादरात् ॥ 170

मुक्त एवेति तद्वाक्यं श्रुत्वा तमभिपूज्य ते ।
ययुरत्यन्तवेगेन यमस्यैव निकेतनम् ॥ 171

ततस्ते यममालोक्य सभासद्भिरुपासितम् ।
इदं निवेद्य कालाय तस्थुः खिन्नमुखा भटाः ॥ 172

यमः खिन्नमुखान्दूतान्विलोक्यात्यन्तदुःखितः ।
किमासीदिति पप्रच्छ ते तद्वृत्तं न्यवदेयन् ॥ 173

ततस्तद्वचनं श्रुत्वा प्रहस्य मुदिताननः ।
बभाषे वचनं चारु यमो दूतहितावहम् ॥ 174

**श्रीयम उवाच -**

महादेवार्चने प्रीतिर्यस्य तिष्ठत्यचञ्चला ।
तस्यापि मुक्तिः फालाक्षपूजकस्य तु किं पुनः ॥ 175

प्राप्यते सर्वथा मुक्तिः शिवपूजकपूजकैः ।
मुक्तिर्न लभ्यते किं तैः साक्षाच्छङ्करपूजकैः ॥ 176

शिवलिङ्गार्चनं कृत्वा शिवलिङ्गस्य सन्निधौ ।
येन त्यक्ता तनुस्तेन मुक्तिः प्राप्यैव सर्वथा ॥ 177

भस्मधारणमात्रेण मुक्तिः सम्प्राप्यते नरैः ।
ततः कथं न सम्प्राप्या मुक्तिः शङ्करपूजया ॥ 178

शिवपूजनरुद्राक्षभस्मधारणतत्परः ।
कीकटोऽपि तनुं त्यक्त्वा शिवरूपं प्रयान्ति हि ॥ 179

शिवपूजनमाहात्म्यं शिवो वेत्त्येव नापरः ।
तदन्यैस्तत्कथं ज्ञेयं तत्त्वतोऽस्माभिरीदृशैः ॥ 180

रत्नतत्वं विजानन्ति सम्यग्रत्नपरीक्षकाः ।
तथा शिवार्चनस्यापि माहात्म्यं वेत्ति शङ्करः ॥ 181

अतः परं हि तं वक्ष्ये शृण्वन्त्वत्यन्तयत्नतः ।
कर्तव्यमपि वक्ष्येऽहमप्रमादेन सादरम् ॥ 182

त्रिपुण्ड्रमात्रं यत्फाले भासते भस्मना कृतम् ।
तान्दृष्ट्वा प्रियमेधा स प्रार्चताघ्यादिसाधनैः ॥ 183

त्रिपुण्ड्ररुद्राक्षधरः शिवपूजापरायणः ।
शिव एवेति विज्ञेयो भवद्भिः सर्वथा भटाः ॥ 184

भासते फालमनिशं यस्य केवलभस्मना ।
तत्तु फालाक्षफालेऽपि लिख्यते नैव संशयः ॥ 185

भस्मरेखात्रयं शुद्धं तत्फालाक्षाक्षरत्रयम् ।
फालपट्टे भस्मरेखास्वरूपैस्त्रिभिरक्षरैः ।। 186

फालाक्षता भाविनीति फालाक्षाक्षरलेखनम् ।
अतः केवलभस्माङ्गाः शिवपूजापरायणाः ।। 187

शिवाकारा इति ज्ञेयाः सत्यं सत्यं न संशयः ।
भस्मोद्धूलितसर्वाङ्गान्दृष्ट्वा सोत्साहमन्वहम् ।। 188

पूजयन्त्यतियत्नेन श्रमालस्यविवर्जिताः ।
रुद्राक्षमालाभरणान्भस्मधारणपूर्वकम् ।। 189

पूजयन्त्यतियत्नेन .... .... .... ।
शिवलिङ्गार्चनासक्तान् भस्मधारणपूर्वकम् ।। 190

पूजयन्त्यतियत्नेन .... .... .... ।
शिवप्रदक्षिणासक्तान् भस्मधारणपूर्वकम् ।। 191

पूजयन्त्यतियत्नेन .... .... .... ।
धूपदान् शङ्करस्थाने भस्मधारणपूर्वयम् । 192

पूजयन्त्यतियत्नेन .... .... .... ।
दीपदान् शङ्करस्थाने भस्मधारणपूर्वकम् ।। 193

पूजयन्त्यतियत्नेन .... .... .... ।
शिवाग्रे नर्तनासक्तान्भस्मधारणपूर्वकम् ।। 194

पूजयन्त्यतियत्नेन .... .... .... ।
सोमवारव्रतपरान् भस्मधारणपूर्वकम् ॥ 195

पूजयन्त्यतियत्नेन .... .... .... ।
प्रदोषपूजनासक्तान्भस्मधारणपूर्वकम् ॥ 196

पूजयन्त्यतियत्नेन .... .... .... ।
रुद्राभिषेकसंसक्तान्भस्मधारणपूर्वकम् । 197

पूजयन्त्यतियत्नेन भ्रमालस्यविवर्जिताः ।
शिवभक्तार्चनपरान्भस्मोद्धूलनपूर्वकम् ॥ 198

पूजयन्त्यतियत्नेन .... .... ।
विल्वपत्रार्चनपरान् भस्मोद्धूलनपूर्वकम् ॥ 199

पूजयन्त्यतियत्नेन .... .... ।
विल्वरोपणसंसक्तान् भस्मोद्धूलनपूर्वकम् ॥ 200

पूजयन्त्यतियत्नेन .... .... ॥ 201

शिव हर भव भर्ग भीम शम्भो
त्रिणयन शङ्कर शर्व चन्द्रमौले ।
भव शरणमितीरयन्ति ये तान्
भजत मुहुर्विनयेन पूजयध्वम् ॥ 202

पुरहर सुरनाथ मन्मथारे

हरिनयनाम्बुजपूजिताङ्घ्रिपद्म ।

भवशरणमितीरयन्ति ये तान्

भजत मुहुर्विनयेन पूजयध्वम् ॥ 203

निरवधिकरुणासुधैकसिन्धो

गिरिश गिरीश महेश पार्वतीश ।

भव शरणमितीरयन्ति ये तान् .... ॥ 204

धृतभसितभुजगराजहार

प्रियहरिवल्लभ दिव्यनीलकण्ठ ।

भव शरणमितीरयन्ति ये तान् .... ॥ 205

विनिहतनरसिंह्मचण्डगर्व

स्फुरदुरुक[1]न्धरकन्ध[2]राग्निमूर्ते ।

भव शरणमितीरयन्ति ये तान् ॥ 206

विनिहतविधिमुण्डमुण्डमाला-

कलन कराल लोलशूलपाणे ।

भव शरणमितीरयन्ति ये तान् .... ॥ 207

---

1 Cloud 2 Neck मेघाभकण्ठेत्यर्थः

विविधविभव वेदगीतकीर्ते

श्रुति[1]विहित विनोदिताष्टमूर्ते ।

भव शरणमितीरयन्ति ये तान् .... ।। 208

शरणद शिपिविष्ट कालकाल

त्रिदशवरामरसेवितङ्घ्रिपीठ ।

भव शरणमितीरयन्ति ये तान् ।।

भजत मुहुर्विनयेन पूजयध्वम् 209

ये भस्मधारणं त्यक्त्वा सन्ध्यां कुर्वन्ति मानवाः ।

तान्पातयन्तु नरकेष्वतिघोरेषु यत्नतः ।। 210

रे भस्मधारणं त्यक्त्वा होमं कुर्वन्ति मनवाः ।

तान्पातयन्तु .... .... ।। 211

ये भस्मधारणं त्यक्त्वा पिबन्ति जलमादरात् ।

तान्पातयन्तु .... .... .... ।। 212

ये भस्मधारणं त्यक्त्वा भक्षयन्ति फलादिकम् ।

तान्पातयन्तु .... .... .... ।। 213

ये भस्मधारणं त्यक्त्वा स्वेच्छं कुर्वन्ति भोजनम् ।

तान्पातयन्तु .... .... .... । 214

---

1 विदित

ये रुद्राक्षानधृत्वैव होमं कुर्वन्ति मानवाः ।
तान्पातयन्तु .... .... .... ॥ 215

ये रुद्राक्षानधृत्वैव पिबन्ति जलमादरात् ।
तान्पातयन्तु .... .... .... ॥ 216

ये रुद्राक्षानधृत्वैव भक्षयन्ति फलादिकम् ।
तान्पातयन्तु .... .... .... ॥ 217

ये रुद्राक्षानधृत्वैव स्वेच्छं कुर्वन्ति भोजनम् ।
तान्पातयन्तु .... .... .... ॥ 218

ये शिवाराधनं त्यक्त्वा पिबन्ति जलमादरात् ।
तान् पातयन्तु नरकेष्वतिघोरेषु यत्नतः ॥ 219

ये शिवराधनं त्यक्त्वा भक्षयन्ति फलादिकम् ।
तान् पातयन्तु .... .... .... ॥ 220

ये शिवराधनं त्यक्त्वा स्वेच्छं कुर्वन्ति भोजनम् ।
तान्पातयन्तु .... .... .... ॥ 221

रुद्राभिषेकसलिलं न पिबन्त्यन्वहं च ये ।
तान्पातयन्तु .... .... .... ॥ 222

ये न कुर्वन्त्यहरहः प्रणामं शूलपणये ।
तान्पातयन्तु .... .... .... ॥ 223

ये न कुर्वन्त्यहरहर्बिल्पत्रैः शिवार्चनम् ।
तान्पातयन्तु .... .... .... ॥ 224

ये न कुर्वन्त्यहरहः पञ्चाक्षरजपं द्विजाः ॥
तान्पातयन्तु .... .... .... ॥ 225

ये न कुर्वन्त्यहरहः श्रीमद्रुद्रजपं द्विजाः ।
तान्पातयन्तु .... .... .... ॥ 226

ये सोमवासरे स्वेच्छं दिवा कुर्वन्ति भोजनम् ।
तान्पातयन्तु .... .... .... ॥ 227

सुरापानादिसंसक्ता ये पापिष्ठा नराधमाः ।
तान्पातयन्तु नरकेष्वतिघोरेषु यत्नतः ॥ 228

ये वसन्ति द्विजा भूमौ शिवभूजापराङ्मुखाः ।
तेभ्यः सृष्टानि नरकान्येतान्यत्र मया भटाः ॥ 229

चकार भोजनं स्वेच्छं त्यक्त्वाऽयं भस्मधारणम् ।
अतोऽयमग्निकुण्डेऽस्मिन्पतितः परिवर्तते ॥ 230

प्रज्वलच्छस्त्रकुण्डेषु पतिष्यत्यल्पधीरयम् ।
ततः सन्तप्तरुधिरे पतिष्यत्ययमीदृशः ॥ 231

सङ्ख्यातीतेषु नरकेष्वयं स्थित्वा ततःपरम् ।
चण्डालयोनिष्वेवायं पुनरुत्पत्तिमेष्यति ॥ 232

एकैकनरकावासोऽप्यतिदुःखावहो भवेत् ।
कृतदुष्कर्मणामत्र परिणामः फलिष्यति ॥ 233

महापातकिनोऽप्यन्ते विधाय शिवपूजनम् ।
प्राणांस्त्यजन्ति चेत्तेषां यातना न भविष्यति ॥ 234

शिवार्चनं शिवध्यानं अन्तकाले नमस्क्रिया ।
दूरीकृत्यास्य दुरितं मोक्षं दास्यत्यसंशयम् ॥ 235

दुर्लभं दुर्लभं पुंसामन्तकाले शिवार्चनम् ।
अतः शिवार्चने प्रीतिर्नित्यमाधीयतां जनः ॥ 236

शङ्करानुग्रहेणैव कुर्वन्त्यन्ते शिवार्चनम् ।
तेन सद्यो भवन्त्येव जना निर्धूतकल्मषाः ॥ 237

शिवार्चनं विना नास्ति पापनाशस्य सम्भवः ।
कृते शिवार्चने पापान्यपयान्ति क्षणादिव ॥ 238

रुद्राक्षमालाभरणाः शिवैकशरणा जनाः ।
पूज्या भवन्ति यत्नेन ब्रह्मनारायणादिभिः ॥ 239

मा गच्छत भ्रमेणापि यूयं शैवगृहान्प्रति ।
भवद्रूपं समालोक्य तेषां पीडा भविष्यति ॥ 240

भवत्कृतं यदि भवे तेषां दुःखं तदा मया ।
त्याज्या भवन्तः सर्वेऽपि शिक्षणीयाश्च यत्नतः ॥ 241

यदि शैवगृहं प्रीत्या भवद्भिर्गम्यते तदा ।
सौम्यरूपधरैरेव गन्तव्यं पुष्पपाणिभिः ॥ 242

यथा शिवार्चने प्रीतिस्तथा शैवजनार्चने ।
नित्यं कार्या तया प्रीत्या प्रीतो भवति शङ्करः ॥ 243

पुरा विष्णु प्रभृतयः कदाचिद्भूतलं गताः ।
तदा हिमालयप्रान्ते ददृशुः शिवपूजकम् ॥ 244

भस्मोद्धूलितसर्वाङ्गं त्रिपुण्ड्राङ्कितमस्तकम् ।
रुद्राक्षमालाभरणं पञ्चाक्षरपरायणम् ॥ 245

बिल्वपत्रादिभिः शम्भुं पूजयन्तं प्रयत्नतः ।
पश्यन्तं देवदेवेशं महेशं पूजितं मुदा ॥ 246

तमेनं प्रेक्ष्य ते सर्वे रोमाञ्चाञ्चितविग्रहाः ।
शिवं सम्पूज्य नत्वा तं प्रणेमुरतिभक्तितः ॥ 247

ततः कृताञ्जलिपुटाः शिवनिष्ठैकमानसाः ।
शिवपूजापरं शैवं शिवमेवान्वमन्वत ॥ 248

शैवः समाप्य पूजां तां दृष्ट्वा हरिमुखान्सुरान् ।
उवाच वचनं चारु श्रद्धाभक्तिपुरःसरम् ॥ 249

यद्भवद्दर्शनं प्राप्तं तत्तु पुण्येन भूयसा ।
शिवपूजकसत्सङ्गः कल्याणं तनुते न किम् ॥ 250

तस्य तद्वचनं श्रुत्वा ब्रह्मविष्णुमुखास्तदा ।
तुष्टान्तः करणो विष्णुरुवाच रुचिरं वचः । 251

धन्योऽसि वयमप्येते धन्याः शैवेन्द्रदर्शनात् ।
इत्युदीरितमाकर्ण्य विष्णोर्वाक्यं सशाङ्करः ।। 252

कृताञ्जलिपुटो भूत्वा प्रत्याह वचनं शुभम् ।। 253

शैव उवाच -

भस्मभासितफालाय रुद्राक्षाभरणाय ते ।
पञ्चार्णजपसक्ताय नमः शैवाय विष्णवे ।। 254

शैवोत्तमस्त्वमेवासि विष्णो धन्योऽसि सर्वथा ।
शिवतत्वं त्वया देव सम्यग् ज्ञातं शुभावहम् ।। 255

स एव धन्यः पूज्यश्च यस्तत्वं वेत्ति शङ्करम् ।
त्वं शवैकनिष्ठोऽसि शैवः पूज्योऽसि सर्वथा ।। 256

शिवतत्वं परिज्ञातुं त्वया तप्तं महत्तपः ।
शं करोतु शिवस्तुभ्यं शिवैकशरणो भव ।। 257

यम उवाच -

इत्युक्तं तद्वचः श्रुत्वा विष्णुरानन्दपूरितः ।
प्रणम्यैनं जगामाशु देवैर्विधिमुखैर्मुदा ।। 258

अतः शैवाः पूजनीयाः प्रयत्नेनादरेण च ।
इत्युक्तास्ते भटाः सर्वे ग्रमेन विनयान्विताः ॥ 259

दुःखं विहाय ते कालं प्रणेमुः प्रीतमानसाः ।
एतस्मिन्नन्तरे देवि दुन्दुभिध्वनिपूर्वकम् ॥ 260

नन्दिध्वजसमाकीर्णं विमानं कामगं शुभम् ।
दृष्ट्वा तत्स्थं च वीक्ष्याथ तेजः पुञ्जमयाकृतिम् ॥ 261

यमः सन्तुष्टहृदयश्चित्रगुप्तमुवाच च ।

**यमः -**

चित्रगुप्त विमानस्थः कोऽयं याति वदस्व मे ॥ 262

किमनेन कृतं पुण्यं विचार्य वद सत्वरम् ।

**चित्रगुप्तः -**

किं वक्तव्यं मया काल, कालकालस्य कीर्तनात् ॥ 263

पापिनोऽपि प्रयास्यन्ति कैलासशिखरालयम् ।
पापिनोऽपि प्रयास्यन्ति कैलासनिलयालयम् ॥ 264

ब्राह्मणोऽप्ययमाचारं सन्त्यजन्पापिसङ्गमात् ।
स्वकुलाचारधर्मस्तु त्यक्त एव दुरात्मना ॥ 265

अनेन बहवः शिष्टा ब्राह्मणा एव संहृताः ।
एतद्धतानां विप्राणां सङ्ख्यां कर्तुं न शक्यते ॥ 266

अनेन निहता गावः कोटिशः शुभलक्षणाः ।
वित्तापहारो बहुधा ब्राह्मणानां कृतोऽमुना ।। 267

भुक्ताश्च बहुधा नार्यो युवत्यो ब्राह्मणस्त्रियः ।
मद्यमांसपरेणैव भुक्ताश्चान्या वरस्त्रियः ।। 268

कदाचिद्युवतीं दृष्ट्वा स्वकन्यामपि सुन्दरीम् ।
तामाकार्य प्रयत्नेन रेमेऽशुद्धाशयोऽन्वहम्। । 269

तस्यामुत्पादयामास स कन्याद्वयमेव च ।
कालेन यौवनं प्राप्ते ते कन्ये तस्य दुर्धियः ।। 270

अबुद्धिऽपूर्वकं वास्तु बुद्धिपूर्वकमेव वा ।
ततः कामातुरो रेमे कन्ये ते पशुभावतः ।। 271

तत्रापि जनयामास हन्त पुत्रान्दुराशयान् ।
एवमन्यानि पापानि कृत्वाऽयं संस्थितः पुराः ।। 272

कदाचिद्दैवयोगेन वनं प्रापायमुद्धतः।
तत्रापश्यत् द्विजान्मार्गे दश वित्तकरान्मुदा ।। 273

ततस्तान्हन्तुमद्युक्तः शस्त्रं जग्राह पाणिना ।
ततो जघान तेष्वष्टौ द्विजांस्तान् क्रूरचेष्टितः ।। 274

ततस्तां स्तद्धतान् दृष्ट्वा विप्रौ दुःखवशंगतौ ।
तमेव हन्तुमुद्युक्तौ द्रव्यलोभवशीकृतौ ।। 275

ततस्तच्छस्त्रमादाय द्विजौ तौ तं निजघ्नतुः ।
ताभ्यां हतः स पापिष्ठः पपात पृथिवीतले ॥ 276

तदा वनचरः कश्चिच्छस्त्रपाणिरुपाययौ ।
तं विलोक्य जगादैवं पतितोऽप्यवनीतले ॥ 277

आहरास्त्रं संहरैतौ प्रहर प्रहराधुना ।
इत्युक्त्वा स जहौ प्राणान् (शस्त्रघात) निपीडितः ॥

ततस्तद्वचनादेव तौ हतौ विप्रसत्तमौ ।
ततो गृहीत्वा तद्द्रव्यं स ययौ विप्रघातकः ॥ 279

प्रहृष्टवदनो भिल्लो विप्रौ निक्षिप्य भूतले ।
तावाच्छाद्य मृदा स्थूलैरुपलैश्च महत्तरैः ॥ 280

आ हरेत्यादितद्वाक्यं सर्वसाक्षी सदाशिवः ।
श्रुत्वा पार्श्वस्थितान्प्राह गणान्प्रति कृपानिधिः ॥ 281

श्रीमहादेवः -

रे रे सौम्य! गणाऽऽयाहि श्रुणु कौतूहलं वचः ।
यच्छ्रुत्वा भवतां चेतः प्रसादमुपगच्छति ॥ 282

अद्य कश्चिन्महापापी मृतो ब्रह्मकुलाधमः ।
तत्कृतानां हि पापानां सङ्ख्या नैवास्ति सर्वथा ॥ 283

तेनैवोक्तमिदं वाक्यं शृणु तद्वक्ष्यते मया ।
आहरास्त्रं संहरेति प्रहर प्रहराधुना ।। 284

इत्युक्त्वा स मृतः पापी कृतब्रह्मवधः खलः ।
तत्पातकानि नष्टानि तद्वाक्योच्चारणात्तदा ।। 285

आहरेत्यादिवाक्यस्थं हरनामाघनाशकम् ।
जातं हि मृतिकालीनं सर्वपापविनाशकम् ।। 286

अतः परं संहरेति वाक्यस्थ'हर'नामतः ।
तस्मै विनष्टपापाय मोक्षं दास्याम्यसंशयम् ।। 287

आहरेत्यादिवाक्यस्थानुपसर्गान्विहाय यत् ।
राजते मुक्तिदं नृणां तन्मे नामचतुष्टयम् ।। 288

महापातकिनाप्युक्तं मन्नामासुविनिर्गमे ।
तस्मै मोक्षं ददात्येव तन्नामोक्तमयन्नतः ।। 289

मम नामानि यावन्ति प्रभावस्तादृशां तथा ।
मृतिकालीनमन्नामस्मरणाद्बहुभिः पुरा ।। 290

मोक्षः प्राप्तः किमस्त्यत्र चित्रं नामैव तादृशम् ।
हरनाम हरत्येव पातकानि बहून्यपि ।। 291

तद्धि पापहरत्वेन सर्वलोकेषु विश्रुतम् ।
सद्यः कृतमहापापोऽप्यन्तकाले शिवस्मृतेः ।। 292

मोक्षं प्राप्तो ह्यतः सौम्य तमिहानय सत्वरम् ।
इत्युक्तः स महेशेन तमेव नयति द्विजम् ॥ 293

अतः परं न तस्यास्ति दुःखलेशोऽपि सर्वथा ।
इत्युक्तस्तद्वचः श्रुत्वा यमः सन्तुष्टमानसः ॥ 294

श्रुतं किं चित्रगुप्तोक्तमिति दूतानुवाच च ।
ततः स विप्रः सम्प्राप मामेव सुरपुङ्गव ॥ 295

सोऽपि मां प्राप सुभगे यमेन परिपूजितः ।
अत एवातियत्नेन मदर्चनपरायणः ॥ 296

निःश्रेयसं प्राप्नुवन्ति सुलभेन वरानने ।
देवतासार्वभौमोऽहं मदेकशरणात्मनाम् ॥ 297

मोक्षं दास्यामि सुभगे सत्यं सत्यं न संशयः ॥ 298

रुद्राक्षाङ्गदकङ्कणाः सितलसद्भस्माङ्गरागाः सदा
शम्भो शङ्कर चन्द्रशेखर (महेश) महादेवेति संवादिनः ।
मन्नामैकसुधासमुद्रलहरीकल्लोललोलोल्लस-
जिह्वा जिह्मविवर्जिता मम हिता सत्यं ब्रवीमि प्रये ॥

॥ इति श्रीशिवरहस्ये सप्तमांशे
सप्तदशोऽध्यायः ॥



## ॥ अष्टादशोऽध्यायः ॥

श्रीशिव उवाच -

शृणु देवि कथामन्यामतिसन्तोषदायिनीम् ।
यस्यास्तु श्रवणादेव हृष्टचित्ता भविष्यसि ॥ 1

पुरा स्वर्गे शचीनाथं दृष्ट्वा गुरुरतिप्रियम् ।
उवाच वचनं वाग्मी सस्मितं प्रीतिपूर्वकम् ॥ 2

भूलोकतीर्थसेवार्थं मया गतमनेकधा ।
दृष्टानि शिवतीर्थानि सद्यः पापहराणि वै ॥ 3

तीर्थेषु बहवो दृष्टाःशैवाश्चैव शिवार्चकाः ।
तेषां तु दर्शनादेव सन्तोषो वर्धते महान् ॥ 4

भस्मोद्धूलितसर्वाङ्गा रुद्राक्षाभरणोज्वलाः ।
दृश्यन्ते यत्र देवेशि तान् दृष्ट्वा मुदितोऽस्म्यहम् ॥ 5

कश्चिद्बिल्वदलैरीशं सम्पूज्यात्यन्तयत्नतः ।
स्तोत्रैरनेकधा स्तुत्वा हृष्टचित्तो बभूव सः ॥ 6

तदा कश्चिद् द्विजस्तत्र समागत्य तमब्रवीत् ।
किमेतमेव विप्रेन्द्र पूजयस्यतिगौरवात् ॥ 7

यथाऽयमेवमेवान्याः पूज्यास्तिष्ठन्ति देवताः ।
ता विहाय बहुप्रीत्या भक्तिस्तेऽत्रानुवर्तते ॥ 8

देवाः सर्वे समाः श्रेष्ठा नान्तरं तेषु विद्यते ।
इत्युक्तं तद्वचः श्रुत्वा स शैवः शिवपूजनम् ॥ 9

समाप्य विधिवद्यत्नान्निर्ययौ शिवमण्टपात् ।
ततस्तं वीक्ष्य सहसा शिवानुत्कर्षवादिनम् ॥ 10

क्रोधेन महताऽऽविष्टो जघान शिवदूषकम् ।
ततः परं यमभटास्तं निन्युर्यमसन्निधिम् ॥ 11

अत्र मे मघवन्किञ्चिद्वक्तव्यं ते कुतूहलात् ।
द्रष्टव्यं कालसदनमचिरादावयोरपि ॥ 12

इति तद्वचनं श्रुत्वा देवेन्द्रो गुरुणा सह ।
ययावत्यन्तवेगेन धर्मराजदिदृक्षया ॥ 13

पूजयामास स गुरुमुपवेश्यासने शुभे ।
तदानीमेव यामीया शिवानुत्कर्षवादिनम् ॥ 14

प्रोथयित्वैव शूलाग्रे समानीय निचिक्षिपुः ।
ततोऽसौ चित्रगुप्तं च दृष्ट्वा प्राह वचः शुभम् ॥ 15

कोऽयमित्याह विनयाच्चित्रगुप्तोऽप्युवाच तम् ।

**चित्रगुप्त उवाच -**

यमायं जननाद्विप्रः परं शङ्करदूषकः ।। 16

इत्युक्तां चित्रगुप्तोक्तिं श्रुत्वा कालोऽतिभीषणः ।
क्रोधाविष्टोऽब्रवीद्दूतान्द्विजमत्रानयन्त्विति ।। 17

ततः पुरः स निक्षिप्तो यमदूतैर्भयानकैः ।
ततः शूलमतिक्रूरो गृहीत्वा तमताडयत् ।। 18

ततः शतघ्नीमादाय कालस्तं क्रूरशासनः ।
ताडयामास वेगेनं क्रोधसङ्कुलितेक्षणः ।। 19

सन्तप्ताऽऽयसपिण्डेन तमताडयदुद्धतम् ।
एवं बहुविधोपायैः पीड्यमानं द्विजोत्तमम् ।। 20

धर्मराजं च संवीक्ष्य देवेन्द्रो भयविह्वलः ।
शनैरुवाच वचनं विनयान्नयकोविदः ।। 21

**देवेन्द्र उवाच -**

किमेतावदुतान्यच्चं शासनं वर्तते यम ।
इत्युक्तं तद्वचः श्रुत्वा बभाषे वचनं यमः ।। 22

तदा स गुरुदेवेन्द्रमुख्यानामभयप्रदम् ।। 23

यमा उवाच -

शिवावज्ञा कृताऽनेन
बहुधा बहुयत्नतः ।
अतोऽस्य नरके वासो
भविष्यति सुदुस्तरे ॥ 24

आब्रह्मकल्पमेतस्य क्रूरं भाव्यं च शासनम् ।
शिवापचारवादी यः स सुरोऽस्तु नरोऽस्तु वा ॥ 25

तस्याहमेव शास्तास्मि योऽहमत्युग्रशासनः ।
शिवभृत्योऽस्म्यहं यस्माच्छिवानुत्कर्षवादिनः ॥ 26

पातयिष्यामि नरकेष्वशेषेषु न संशयः ।
सार्धार्बुदानि नरकाण्यतिदुःखप्रदानि हि ॥ 27

तेष्वयं प्रत्यहं दुष्टः पातनीयो न संशयः ।
किञ्चैतत्पितरः सन्ति स्वर्गे धर्मवरार्जिते ॥ 28

तेऽप्यानेया हि नरके पातनीयाः प्रयत्नतः ।
सर्वदेवोत्तमं शम्भुं योऽन्यथा वक्तुमिच्छति ॥ 29

तस्यापि नरकावासो दुःसहः सम्भविष्यति ।
देवेन्द्रोऽस्त्वस्तु वा चन्द्रो यद्वोपेन्द्रोऽस्तु किं मम ॥ 30

यदि तेषु शिवद्रोहो नरके पातयामि तान् ।
शासनीयाः प्रयत्नेन शिवानुत्कर्षवादिनः ॥ 31

इत्याज्ञा शङ्करेणैव पुरा दत्ता ममस्ति हि ।
इत्युदीरितमाकर्ण्य देवेन्द्रो भयविह्वलः ॥ 32

उवाच विनयेनैव बद्धाञ्जलिपुटस्तदा ॥ 33

**इन्द्र उवाच -**

एतैः किं किं कृतं पापं नरके पतितैर्यम ।
तत्सर्वमविशेषेण वद मह्यं यथाक्रमम् ॥ 34

**शिवः -**

इत्युक्तं तद्वचः श्रुत्वा यमो वक्तुं प्रचक्रमे ।
अङ्गुल्यग्रेण तीक्ष्णेन दर्शयन्नुग्रलोचनः ॥ 35

**यम उवाच -**

एते सर्वेऽपि पापिष्ठाः शिवार्चनपराङ्मुखाः ।
एते सर्वेऽपि पापिष्ठाः शिवस्मृतिविवर्जिताः ॥ 36

एते शिवाय साष्टाङ्गप्रणामाकारिणो भ्रमात् ।
नित्यं सन्दग्धसर्वाङ्गास्तिष्ठन्त्येतान्विलोकय ॥ 37

यः शङ्कराय साष्टाङ्गप्रणामान्न करिष्यति ।
सन्दग्धाङ्गारकुण्डेषु निर्दयं विनिपात्यते ।। 38

एते सर्वे महादेवकथाश्रवणवर्जिताः ।
भुजङ्गगर्तपतितास्तिष्ठन्त्येतान्विलोकय ।। 39

एते सर्वे प्रदोषेषु त्यक्तशङ्करपूजनाः ।
घोरवृश्चिककुण्डेषु तिष्ठन्ति पतिताः सदा ।। 40

एते शिवानर्पितान्नफलदुग्धादिभोजिनः ।
कृमिपूयास्रकुण्डेषु तिष्ठन्त्येतान्विलोकय ।। 41

एते त्यक्तशिवाचाराः सर्वे त्यक्तशिवव्रताः ।
विविधेष्वेषु कुण्डेषु तिष्ठन्त्येतान्विलोकय ।। 42

एनं पश्याम कुण्डस्थं वार्ताऽप्यस्योच्यते मया ।
यद्वार्ताश्रवणात्सद्यो रोमाञ्चोऽति भविष्यति ।। 43

अयं कुरूढको नाम ब्राह्मणो वेदपारगः ।
धनधान्यादिसम्पन्नो गोमहिष्यादिपोषकः ।। 44

काटकोटर इत्येकः पुत्रोऽस्याभवदुत्तमः ।
स सर्वदा शिवाचारनिरतः शिवतत्परः ।। 45

उद्धूलनत्रिपुण्ड्राभ्यां रुद्राक्षैश्च विभूषितः ।
स पूजयति पुष्पाद्यैः शिवलिङ्गं प्रयत्नतः ।। 46

शिवनामामृतेनैव जिह्वा तेन पवित्रिता ।
नित्यं शिवकथामेव शुश्राव प्रीतमानसः ॥ 47

सप्तवारं प्रयत्नेन प्रत्यहं गिरिजापतिम् ।
स विल्वपत्रपुष्पाद्यैः पूजयत्यतिभक्तितः ॥ 48

प्रणामान्बहुशः कृत्वा साष्टाङ्गान्भक्तिपूर्वकम् ।
नृत्तं चकार यत्नेन शिवं वीक्ष्यातिहर्षितः ॥ 49

यदा भुङ्क्ते तदा भोज्यं यावदन्नमपेक्षितम् ।
सोपदंशं स पानीयं निवेदयति शङ्करम् ॥ 50

न गृह्णात्येव नियमान्नित्यं शपथपूर्वकम् ।
अनर्पितं महेशाय फल वा जलमेव वा ॥ 51

भस्मनोऽभिभवो भावीत्युत्कृष्टमपि चन्दनम् ।
न तेन लेपितं फाले विभूत्युपरि सर्वथा ॥ 52

उद्धूलिताङ्गमालोक्य हृष्टो भवति सर्वथा ।
करोत्युद्धूलनं भक्त्या नित्यमापादमस्तकम् ॥ 53

वेदे तु महती भक्तिःश्रुत्वा वैदिकर्मसु ।
स कदाचित्प्रयत्नेन बिल्वपत्रार्चनप्रियः ॥ 54

एकाकी बिल्ववृक्षाढ्यं वनं प्राप मृगावृतम् ।
ततः कश्चिद्घोररूपः पिशाचः पर्वताकृतिः ॥ 55

विलोक्य बालकं विप्रमाजगामातिवेगत: ।
तं तादृशं समायान्तं पिशाचं वीक्ष्य दूरत: ।। 56

जगाद वचनं बालो हसन्विस्मयपूर्वकम् ।

काटकोटर: -

पिशाचोऽयं समागत्य किं वा मह्यं करिष्यति ।। 57

मूर्खोऽयं नाभिजानाति प्रभावं भस्मनोऽनघम् ।
परिवेषं करिष्यामि भस्मना सावधानत: ।। 58

परिवेषमतीत्यायमागन्तुं शक्नुयात्कथम् ।
इत्युक्त्वा भस्म सङ्गृह्य शिवमन्त्राभिमन्त्रितम् ।। 59

चकारोद्धूलनं सद्यस्त्रिपुण्ड्रं च यथाविधि ।
तत: समागत: सोऽपि पिशाचो विकृताननः ।। 60

गृहीतुकामस्तं वेगाद्धृतमुष्टि: समुद्यत: ।
परिवेषाद्बहि: स्थित्वा बलवान्दु:खितोऽभवत् ।। 61

अन्त: प्रवेष्टुं शक्तोऽपि न शशाक पिशाचक: ।
तद्भस्समण्डलं शुद्धं महाशैवविनिर्मितम् ।। 62

बहुधा परिवृत्यायं परिवेषं मुहुर्मुहु: ।
परिश्रान्तोऽभवत्सद्य: स्वेदापूरितविग्रह: ।। 63

ततः स दूरतः स्थित्वा परिवेषादुवाच तम् ।
हे बालक त्वया किं वा कृतमस्ति वदस्व मे ॥ 64

अहं तु पर्वताकारः सिद्धानामपि मर्दकः ।
एतादृशस्य मे बाल कथं वा कुण्ठितं बलम् ॥ 65

एनं विलोक्य विप्रेन्द्रतनयः प्रत्यभाषत ।
रे रे पिशाच किं पूर्वं पापमस्ति कृतं त्वया ॥ 66

येन प्राप्तं पिशाचत्वं बहुदुःखप्रदायकम् ।
इत्युक्तस्तद्वचः श्रुत्वा दुःखितस्तमुवाच सः ॥ 67

न स्मर्यते मया पापं पूर्वं जन्मान्तरे कृतम् ।
येन प्राप्तं पिशाचत्वं बहुदुःखप्रदायकम् ॥ 68

इत्युक्तं तद्वचः श्रुत्वा दृष्ट्वा च विनयान्वितम् ।
मन्त्रितं भस्म सङ्गृह्य तन्मूर्ध्नि स निचिक्षिपे ॥ 69

ततस्तद्भस्मयोगेन ध्वस्तपापः पिशाचकः ।
दिव्यां स्वकां तनुं प्राप सूर्यमण्डलसन्निभाम् ॥ 70

ततः सन्तुष्टहृदयः पुष्पैः सम्पूज्य बालकम् ।
नत्वा कृताञ्जलिपुटः कृतार्थोऽस्मीत्युवाच सः ॥ 71

तं दृष्ट्वा विस्मितो बालस्तमुवाच वचो मुदा ।
किं पातकं त्वया पूर्वं कृतमित्यनुमोदय ॥ 72

ततस्तं बालकं दृष्ट्वा स्मितपूर्वकमादरात् ।
उवाच वचनं चारु प्रतिज्ञापूर्वकं मुदा ॥ 73

गन्धर्वोऽहं द्विजश्रेष्ठ गानशास्त्रविशारदः ।
मया दुःखं पुरा दत्तं शैवायामिततेजसे ॥ 74

एवमुक्तं पुरा पूर्वं शैवमालोक्य बालक ।
भस्मना श्वेतमभवच्छरीरमिति मोहतः ॥ 75

ततः स दुःखितः शैवः मां शशाप हि तत्क्षणे ।
पिशाचतनुमाश्रित्य वनेऽस्मिन्भ्रम सत्वरम् ॥ 76

तदाप्रभृति घोरेयं पिशाचतनुरागता ।
कल्पानामयुतं जातं दुःखं भुक्तं मया बहु ॥ 77

त्वत्प्रसादेन शैवेन्द्र मुक्तोऽहं घोरशापतः ।
त्वदीयानां न सन्देहः पालनीयोऽहमादरात् ॥ 78

पुनर्मह्यं मन्त्रपूतं भस्म देहि द्विजोत्तम ।
यद्योगेन मया प्राप्ता गान्धर्वी तनुरुत्तमा ॥ 79

उपकारो मया कार्यः स्वशक्त्या शैवपुङ्गव ।
किं वा तवेप्सितं वस्तु वदात्र भुवनत्रये ॥ 80

शिवभक्त्या भवान्नित्यं प्राप्तकामोऽसि यद्यपि ।
तथापि वद शैवेन्द्र मत्सन्तोषार्थमादरात् ॥ 81

इत्युक्तं तद्वचः श्रुत्वा भस्म दत्त्वाभिमन्त्रितम् ।
मया स्मृतस्त्वमायाहीत्युक्त्वा च प्रीतिपूर्वकम् ॥ 82

ततः स नत्वा शैवेन्द्र तथेत्युक्त्वा जगाम सः ।
ततः परं बिल्वपत्राण्याहर्तुं च प्रचक्रमे ॥ 83

स तत्रात्यन्तरम्याणि बिल्वपत्राणि सादरम् ।
गृहीत्वा स वनं त्यक्त्वा स्वगृहाभिमुखो ययौ ॥ 84

तदानीमेव सविता सम्प्राप्तोऽस्तगिरिं तदा ।
बालः प्रदोषकालीनां पूजां कर्तुं प्रचक्रमे ॥ 85

स गोमयमयं लिङ्गं सम्पाद्यात्यन्तयत्नतः ।
ध्यात्वा सम्यङ्महादेवं चकारावाहनं तदा ॥ 86

तदानीं तत्पिता पुत्रः क्व गतोऽसीति दुःखितः ।
आजगामातियत्नेन सर्वतोऽपि विचारयन् ॥ 87

आगत्यावाहिते लिङ्गे स गोमयमये द्विजः ।
निक्षिप्तश्चरणद्वन्द्वं क्व गतोऽसीति संवदन् ॥ 88

लिङ्गोपरिस्थितं दृष्ट्वा तत्पितुश्चरणद्वयम् ।
चिच्छेद क्रूरशस्त्रेण क्रोधसङ्कुलितेक्षणः ॥ 89

ततः स भूमौ पतितः पिता दुःखाभिकर्शितः ।
हा हतोऽस्मीति पुत्रेण रुरोदाश्रूणि मोचयन् ॥ 90

ततः स जिह्वामुत्खाय प्राणेभ्योऽपि व्ययोजयत् ।
शिवलिङ्गे कथं पादो निक्षिप्तोऽद्येति संवदन् ॥ 91

एतस्मिन्नन्तरे तस्य क्रोधः शान्तोऽभवत्क्षणात् ।
ततः पूजां चकारायं शिवलिङ्गान्तरे ततः ॥ 92

तदानीमतिसन्तुष्टः शिवः प्रत्यक्षतां गतः ।
विलोक्य शङ्करं शैवस्तुष्टाव बहुधा स्तवैः ॥ 93

ततो देवो भवेत्येष वरो दत्तो शिवेन हि ।
शैवस्तद्वरमाकर्ण्य ययाचेऽन्यवरं मुदा ॥ 94

त्वय्यस्तु मम गौरीश भक्तिरव्यभिचारिणी ।
शैवी भक्तिरभीष्टानि मह्यं दास्यत्यसंशयम् ॥ 95

किं मे त्रिदशभावेन त्रिदशत्वं न मे मतम् ।
निर्दशत्वं मया प्राप्तं महेश तव पूजया ॥ 96

अधुना निर्दशत्वं च मम मास्तु महेश्वर ।
भूलोक एव स्थित्वाहं तव पूजां करोम्यहम् ॥ 97

अनेकजन्मतपसा मानुषं जन्म लभ्यते ।
तत्रापि द्विजजन्मेदं त्वत्प्रसादेन लभ्यते ॥ 98

तत्रापि भूरिभाग्येन त्वयि भक्तिः प्रजायते ।
सा मोक्षदा भवत्येव भक्तिरव्यभिचारिणी ॥ 99

स्थित्वात्र भारते वर्षे तव पूजां करोम्यहम् ।
पुष्पैर्नानाविधैर्द्रव्यैः बिल्वपत्रैश्च कोमलैः ।। 100

अविच्छिन्ना यथा पूजा क्रियते सर्वथा मया ।
तथा वरं महादेव देहि मह्यं महेश्वर ।। 101

किञ्च मां प्रापय विभो काशीं तद्रूपिणीं पराम् ।
यत्र गत्वा न शोचन्ति देवाश्चैव शिवार्चकाः ।। 102

विश्वेशलिङ्गरूपेण यत्र त्वमधितिष्टसि ।
तत्रास्तु मम देहस्य वियोगस्त्वत्प्रसादतः ।। 103

तत्र त्यक्ततनोः शम्भो श्रीमत्पञ्चाक्षरः परः ।
देयस्त्वया कृपासिन्धो तं लब्ध्वा मोक्षमाप्नुयाम् ।। 104

भक्तिर्वैश्वेश्वरे लिङ्गे काश्यां निवसतो मम ।
यथा दृढा भवेन्नित्यं तथा कुरु महेश्वर ।। 105

अयं वरोत्तमः शम्भो वरोऽन्यो नैव याच्यते ।
अयमेव वरो यस्मादनेकतपसां फलम् ।। 106

**यमः उवाच -**

इत्युक्तं तद्वचः श्रुत्वा तथास्त्वित्यनुमोदितः ।
तत्रैवान्तर्दधे लिङ्गे लिङ्गरूपी सदाशिवः ।। 107

तत्पिताऽयं शिवद्रोही तत्पुत्रेणैव मारितः ।
भुक्त्वा बहूनि दुःखानि स्थास्यत्यत्र न संशयः ॥ 108

पश्य शङ्करभक्तानां माहात्म्यमतिशोभनम् ।
अगणय्य द्विजस्तातं हत्वा हृष्टोऽधितिष्ठति ॥ 109

स्नेहाश्रयः पिता तत्राप्ययं वेदविदुत्तमः ।
तथापि निजघानैनं शिवद्रोहवशात्पुनः ॥ 110

पिता पितामहो वास्तु ब्राह्मणः क्षत्रियोऽपि वा ।
शिवद्रोही यदि भवेत् स हन्तव्य इति श्रुतिः ॥ 111

शिवद्रोहिणमायान्तं यादृशं तादृशं द्विजम् ।
हत्वापि मुक्तिमाप्नोति शिवभक्तेःफलं त्विदम् ॥ 112

प्रबलश्चेच्छिवद्रोही यदि हन्तुं न शक्यते ।
तदा देशान्तरं गच्छेत् हित्वा तत्स्थलमादरात् ॥ 113

तथा च श्रुतितत्वज्ञः शैवः स्वपितरं द्विजम् ।
श्रुतितत्वं विचार्येव जघान श्रुतिपारगः ॥ 114

शिवान्यसुरतुल्यत्वं यः शिवे वक्तुमिच्छति ।
वियोजयति तं शीघ्रं प्राणेभ्योऽयं शिवार्चकः ॥ 115

शिवे शिवान्यदेवेभ्यो न्यूनता येन कल्प्यते ।
सा तनुत्स्वविचार्यैव विदार्या क्रकचेन हि ॥ 116

दृष्टास्ते ननु यावन्तः शिवानुत्कर्षवादिनः ।
तावतामपि सर्वेषां मुखं निज्वालयत्ययम् ॥ 117

दिवा येन भ्रमेणापि भुज्यते सोमवासरे ।
तमानीय क्रूरचित्तं कशाभिस्ताडयत्ययम् ॥ 118

यो भस्मधारणं त्यक्त्वा भोक्तुमिच्छति मानवः ।
तमानीयातियत्नेन पाषाणैस्ताडयत्ययम् ॥ 119

रुद्राक्षधारणं त्यक्तं येन भ्रान्त्यापि तं नरम् ।
कारागृहे प्रयत्नेन प्रवेशयति निर्दयम् ॥ 120

शिवलिङ्गार्चनं त्यक्त्वा भोक्तुमिच्छति यो नरः ।
तमानीयायसैः पिण्डैः सताडयति तत्तनुम् । 121

येन न क्रियते नित्यं प्रदोषे शिवपूजनम् ।
तमानीयातियत्नेन कण्टकैस्ताडयत्ययम् ॥ 122

शिवव्रतानि त्यक्तानि येन नित्यं भ्रमादपि ।
तं नरं शृङ्खलैर्बध्वा गर्ते सम्पातयत्ययम् ॥ 123

अधर्मनिरतान्दुष्टान् शासयन्नेव चास्तिकः ।
बहुधाधर्मनिरतानेवं शास्ति शिवार्चकः ॥ 124

एवमेतादृशं श्रुत्वा तद्देशाधिपतिर्धनी ।
तद्दर्शनकृतोत्साहः सामात्यः समुपाययौ ॥ 125

आगत्यात्यन्तविनयात्स राजा सर्वसाधनैः ।
पूजायामास शैवेन्द्रं सामात्यः सानुगो मुदा ।। 126

ततः स शैवस्तं दृष्ट्वा भस्मोद्धूलितविग्रहम् ।
कुशलं किमु राजेन्द्रेत्याबभाषे नताननम् ।। 127

ततः स राजा विनयात्प्रणम्योवाच सादरम् ।
बृहस्पतिरिवात्यन्तं श्राव्यं वचनमुत्तमम् ।। 128

राजोवाच -

शैवेन्द्र त्वत्प्रसादेन कुशलं वर्तते मम ।
राष्ट्रं सर्वं त्वत्प्रसादात्सुखमेवाधितिष्ठति ।। 129

यस्मिन् राष्ट्रे त्वया नित्यं स्थीयते द्विजपुङ्गव ।
तत्र सर्वा समृद्धिश्च वर्धते चोत्तरोत्तरम् ।। 130

काटकोटर उवाच -

अप्रमादेन सततं भस्मनोद्धूलनं कुरु ।
त्रिपुण्ड्रधारणं सम्यक्कुरु विध्युक्तमार्गतः ।। 131

रुद्राक्षधारणं नित्यं कुरु यत्नेन सादरम् ।
शिवपूजां प्रयत्नेन कुरु बिल्वदलैर्मुदा ।। 132

शैवं पञ्चाक्षरं नित्यं जप यत्नपुरःसरम् ।
कालत्रयेऽप्यर्चयस्व शिवनिष्ठो भवानिशम् । 133

रुद्राभिषेकसलिलं पिब प्रत्यहमादरात् ।
भुङ्क्ष्वान्नं प्रत्यहं स्वादु शिवाय विनिवेद्य च ॥ 134

शङ्कराय निवेद्यैव पिबोदकमपि प्रियम् ।
निवेदितं च ताम्बूलं स्वीकुरु त्वमतन्द्रितः ॥ 135

शयने भोजने नित्यं शङ्करं स्मर भक्तितः ।
नित्यं शिवकथां पुण्यां शृणु भक्तिपुरःसरम् ॥ 136

शैवैः सहैव सततं वार्तां कुरु यथोचितम् ।
शैवेभ्य एव यत्नेन धनं देहि प्रयत्नतः ॥ 137

शैवान्दृष्ट्वाऽतियत्नेन पूजयोत्थाय सादरम् ।
शैवेषु विनयेनैव वार्तां कुरु कृताञ्जलिः ॥ 138

शैवे न कुरु कौटिल्यं प्रमादेनापि सर्वथा ।
शैवांस्तोषय यत्नेन प्रीत्या पूजय सर्वथा ॥ 139

अशैवानतियत्नेन संहरातिप्रयत्नतः ।
अशैवसम्भृतान्देशान् मा पालय नरेश्वर ॥ 140

शिवालयानि यत्नेन कारयस्व स्वशक्तितः ।
शिवालयेषु सर्वेषु कारयस्वार्चनं मुदा ॥ 141

शिवस्थानेषु रम्याणि जलकुण्डानि कारय ।
शिवस्थानेषु पूजार्थं नित्यं द्रव्यं प्रकल्पय ।। 142

कारयस्वालङ्कृतानि शिवस्थानानि सादरम् ।
पूजोपकरणार्थाय सदा यत्नपरो भव ।। 143

मा पालयस्व तद्राष्ट्रं यद्राष्ट्रमशिवालयम् ।
मा विलोकय तं देशं यो देशोऽस्त्यशिवालयः ।। 144

मा विलोकय यत्नेन स्त्रिबं त्यक्तशिवार्चनाम् ।
मा विलोकय भृत्यांश्च शिवभक्तिविनार्जितान् । 145

शिवव्रतानि सततं कुरु यत्नेन सादरम् ।
नित्यं पार्थिवलिङ्गानि पूजयस्व नरेश्वर ।। 146

यस्तु पर्थिवलिङ्गानि पूजयेदन्वहं मुदा ।
स महाभग्यभुग्भूत्वा लभते शाङ्करं पदम् ।। 147

यस्यास्ति मोक्षलाभेच्छा तेन यत्नेन सादरम् ।
पूजनीयं प्रयत्नेन पार्थिवं लिङ्गमुत्तमम् ।। 148

राजन्पार्थिवलिङ्गस्य पूजनादेव सर्वथा ।
मुक्तिकान्ता समायाति स्वयमेवातियत्नतः ।। 149

मृण्मयं लिङ्गमभ्यर्च्य महादारिद्र्यनाशकम् ।
महतीं श्रियमाप्नोति वीर्यं तेजश्च विन्दति ।। 150

अर्चितं नार्मदं लिङ्गं नाशयत्यघपर्वतम् ।
ददाति महदैश्वर्यं मुक्तिं चान्ते प्रयच्छति ।। 151

पर्थिवं लिङ्गमभ्यर्च्य शिवैकपरदैवतैः ।
अपुनर्भवमुक्तिर्हि जीवन्मुक्तिश्च लभ्यते ।। 152

शिवान्यदेवतासक्तः पार्थिवं लिङ्गमर्चयन् ।
न तत्फलमवाप्नोति सत्यमित्याह गौतमः ।। 153

अतः शैवोभव प्रीत्या सबाह्याभ्यान्तरमादरात् ।
तत्पूजनात्तवेष्टार्थाः सिध्यन्त्येव न संशयः ।। 154

कुबेरस्य धनं पूर्वं सर्वं वैश्रवणोऽहरत् ।
ततो दरिद्रः समभूत्कुबेरो धनवर्जितः ।। 155

ततोऽतिदुःखं संप्रप्य जगाम गिरिशालयम् ।। 156

हिमवान्पूजयित्वा तं पप्रच्छात्यन्तदुःखितम् ।
किमासीद्राजराजाद्य खिन्न एव हि दृश्यसे ।। 157

खेदकारणमाचक्ष्व त्यक्तदुःखो भव स्वयम् ।
एवं पृष्टो हिमवता बाष्पधारापरिप्लुतः ।। 158

जगाद वचनं दुःखी गतं धनमिति स्वकम् ।
तच्छ्रुत्वा हिमवान्धीरोः विस्मितः पर्यपृच्छत ।। 159

कथं जातो हि निःश्रीको वद सर्वं यथायथम् ।

कुबेर उवाच -

पूर्वेद्युरन्यासक्ते तुत्यक्तं सायं शिवार्चनम् ॥ 160

ततः परं मया रात्रौ न कृत शिवपूजनम् ।
तदानीं विश्रवा नाम गन्धर्वः कश्चिदागतः ॥ 161

तेन सर्वं धनं नीतं तिरस्कृत्यैव मां ततः ।
इत्युदीरितमाकर्ण्य कुबेरस्य हितावहम् ॥ 162

बभाषे वचनं धीमान् विचार्य च पुनः पुनः ।
कुरुष्व पार्थिवं लिङ्गं षोडशाङ्गुलमुन्नतम् ॥ 163

अनावृत्तासमावृत्तमामूलाग्रं समुन्नतम् ।
सार्धवत्सरपर्यन्तं पूजयस्वातिभक्तितः ॥ 164

कर्पूरदीपानमलान्कुरु सार्धायुतं त्रयम् ।
गुग्गुलागरुधूपेन प्रीणयस्व महेश्वरम् ॥ 165

चतुर्विंशतिसाहस्रं जप पञ्चाक्षरं मुदा ।
एवमेवान्वहं प्रीतया सप्तवारं महेश्वरम् ॥ 166

पूजयस्वातियत्नेन शिवैकशरणः सदा ।
सार्धवत्सरपर्यन्तमेवं कृत्वा शिवार्चनम् ॥ 167

ततः कुरु यथा शास्त्रमुद्यापनमतन्द्रितः ।
उद्यापनविधिं वक्ष्ये शृणु सर्वं विशेषतः ॥ 168

यत्कृत्वैवाविलम्बेन लप्स्यसे धनमुत्तमम् ।
यद्वा मृल्लिङ्गमानेन सौवर्णं लिङ्गमुत्तमम् ॥ 169

सम्पादनीयं यत्नेन नवलक्षणलक्षितम् ।
राजतान्यपि लिङ्गानि तेन मानेन कारयेत् ॥ 170

सुवर्णैर्युतैः कार्यं एकैको वृषभेश्वरः ।
अन्यूननतिरिक्तास्तु कर्तव्या वृषभेश्वराः ॥ 171

एतानि सोपकरणान्युपादाय ततः परम् ।
ग्राह्याणि पट्टवस्त्राणि श्वेतान्यत्युज्ज्वलानि च ॥ 172

ततश्च श्रावणे मासि पौर्णमास्यां विशेषतः ।
उद्यापनं प्रयत्नेन कार्यं विधिपुरःसरम् ॥ 173

तत्पूर्वेद्युः प्रयत्नेन विप्राः षोडश शाङ्कराः ।
निमन्त्रणीया विधिवदर्घ्यदानपुरःसरम् ॥ 174

आचार्यस्तत्र कर्तव्यस्तदन्यः शैवपुङ्गवः ।
तत्र ब्रह्मा तु कर्तव्यस्तदन्यः शाङ्करोत्तमः ॥ 175

ततो लिङ्गानि दुग्धाद्यैरभिषिच्य यथाविधि ।
मण्टपे स्थापनीयानि वितानाद्यैरलङ्कृते ॥ 176

रात्रौ पूजा प्रकर्तव्या यत्नेन विधिपूर्वकम् ।
रात्रौ जागरणं कार्यमुपोषणपुरःसरम् ।। 177

ततः प्रातः समुत्थाय स्नात्वा पूजां विधाय च ।
ब्राह्मणैः सह सर्वैश्च शाम्भवैर्यत्नपूर्वकम् ।। 178

मध्वाज्यशर्करायुक्तपरमान्नेन सादरम् ।
होमः कार्यः प्रयत्नेन पञ्चाक्षरविधानतः ।। 179

पञ्चलक्षं प्रयत्नेन हुत्वैव परमान्नतः ।
ततः सबिल्वमधुना होमस्तावान्विधीयते ।। 180

ततः सक्षीरमधुना विल्वपत्रान्वितेन च ।
साज्यं सक्षीरमधुना बिल्वपत्रान्वितेन च ।। 181

एवं होमः प्रयत्नेन कर्तव्यस्तदनन्तरम् ।
लिङ्गदानानि कार्याणि जाबालोक्तविधानतः ।। 182

भोजनीयाः प्रयत्नेन ततो ब्राह्मणपुङ्गवाः ।
सुवर्णायुतमुत्कृष्टा दक्षिणात्र विधीयते ।। 183

वृषभान्वितलिङ्गानि दत्वा वस्त्राणि चादरात् ।
स्वकृतं कर्म कर्तव्यं महादेवार्पणं ततः ।। 184

एवं करोषि चेत्सम्यङ्महादेवस्य पूजनम् ।
तेनैव निधयः प्राप्या नवाप्याशु न संशयः ।। 185

**कादकोटर उवाच -**

एवमुक्तो हिमवता स चकार शिवव्रतम् ।
ततः कुबेरः सम्प्राप शीघ्रं स निधिमव्ययम् ॥ 186

तदाप्रभृति यत्नेन कुबेरः शिवपूजनम् ।
सप्तवारं प्रयत्नेन कर्तुं समुपचक्रमे ॥ 187

शिवपूजाप्रभावेण स त्र्यम्बकसखोऽभवत् ।
ततः पार्थिव यत्नेन श्रद्धया त्वं शिवार्चनम् ॥ 188

कुरु यत्नेन महता विल्वपत्रादिसाधनैः ।
सर्वदा शङ्करस्यैव कुरु ध्यानं प्रयत्नतः ॥ 189

निरीक्षस्व प्रयत्नेन पूजितं श्रीमहेश्वरम् ।
जप पञ्चाक्षरं मन्त्रमप्रमादेन नित्यशः ॥ 190

तेत सर्वार्थसिद्धिस्ते भविष्यति न संशयः ।
क्षणार्धमपि राजेन्द्र शङ्करध्यानवर्जितः ॥ 191

माभूस्त्वमुपदेशोऽयं सर्वकार्यार्थसाधकः ।
सर्वसाधारणा धर्मा इदानीं समुदीरिताः ॥ 192

राजधर्मेण सततं पालय त्वं स्वकाः प्रजाः ।

**यम उवाच -**

इत्युक्तं तद्वचः श्रुत्वा राजा विनयपूर्वकम् ॥ 193

शैवं सम्पूज्य यत्नेन जगाम नगरं स्वकम् ।
तस्य शैवस्य जनकः शिवद्रोहवशादिह ।। 194

पतितो नरके भूरि भुङ्क्ते दुःखान्यनेकशः ।
अनेन चरणौ दत्तौ शिवलिङ्गोपरि भ्रमात् ।। 195

तावताप्यनुभूयन्ते दुःखानि विविधानि हि ।
ध्मायमानाग्निकुण्डस्थो द्रष्टव्यो मन्मथस्त्वया ।। 196

स्तम्भं दन्दह्यमानं तं समालिङ्ग्यात्र तिष्ठति ।
मन्मथोऽयं ताड्यते हि सन्तप्तायसशृङ्खलैः ।। 197

कशाभिस्ताड्यते तप्तैर्वक्रैर्दीर्घैश्च दारुणैः ।
भिण्डिपालादिभिस्तप्तैस्ताड्यतेऽत्यन्तमुन्नतैः ।। 198

सन्तप्तायसपिण्डैश्च ताड्यते मर्मघातकैः ।
कथं वा तप्तशूलाग्रैः प्रोथितोऽस्त्यतिदारुणैः ।। 199

कथं वा सिच्यते तप्ततैलेनातिसुदुःसहम् ।।
अन्यदेवसमो रुद्रो न रुद्रो दैवतोत्तमः ।। 200

इत्युवाच पुराकामस्तस्येदं कर्मणः फलम् ।
सर्वदेवाधिदेवेशं शिवं यो मनुतेऽन्यथा ।। 201

तैनैवमेवं दुःखानि प्राप्तव्यानि न संशयः ।
महाविष्णुप्रियतमः शम्बरारिस्तथाप्ययम् ।। 202

भुङ्क्तेऽत्र नरकाण्येव शिवद्रोहेण मन्मथः ।
नरके पतितं श्रुत्वा मन्मथं कमला पुरा ॥ 203

दुःखाद्विष्णुमुवाचेदं वचनं साश्रुलोचना ।

**लक्ष्मीरुवाच -**

तव प्रियतमो मारो नरके पतितो हरे ॥ 204

तमुद्धारयातियत्नेन मम दुःखं निवारय ।
इति तद्वचनं श्रुत्वा स लक्ष्मीरमणोऽब्रवीत् ॥ 205

दुःखं माकुरु मुग्धे त्वमथ चोवाच सादरम् ।
अस्मदादिसमत्वेन मन्मथो वेद शङ्करम् ॥ 206

देवाधिदेवः स शिवः कथमस्मत्समो भवेत् ।
अहं तु देवदेवस्य महादेवस्य किङ्करः ॥ 207

मत्तुल्यः स कथं ज्ञेयो शिवो देवशिखामणिः ।
सेवकेनैव संसेव्यः सेव्यो देवोत्तमः शिवः ॥ 208

तथा च सेवकैः सेव्यो महादेवो वरः शिवः ।
महेश्वर इति ख्यातः शिवो नैवेतरे सुराः ॥ 209

वयं ब्रह्मादयो देवा नित्यं यद्द्वारकिङ्करैः ।
ताड्यन्ते तेन देवेन समाः मान्याः कथं प्रिये ॥ 210

अस्मान्न गणयत्येव कोऽपि शङ्करकिङ्करः ।
तादृशः शङ्करोऽस्माभिः कथं तुल्यो भविष्यति ॥ 211

मन्मथस्तु महादेवमस्मत्तुल्यममन्यत ।
योऽन्यतुल्यतया वेद मोहाद्देवं महेश्वरम् ॥ 212

तस्येदृशानि दुःखानि प्राप्यव्यान्येव सर्वथा ।
तदुद्धाराय यत्नोऽपि मया कर्तुं न शक्यते ॥ 213

कृतोऽपि विफलो यत्नो भवेदेव न संशयः ।
पतितो यमहस्ते यः श्रीमहादेवनिन्दकः ॥ 214

न तस्य निर्गमस्तस्मात्कल्पकोटिशतैरपि ।
यमस्तु देवदेवस्य महादेवस्य किङ्करः ॥ 215

स किं मद्वचनं श्रुत्वा मन्मथं मोचयेत्प्रिये ।
शासनीयो भवेत्सर्वैः पुत्रोऽपि शिवनिन्दकः ॥ 216

तदुद्धराय यत्नश्चेत्क्रियतेऽद्य मया प्रिये ।
तदा मयापि तेनैव सह स्थेयं भविष्यति ॥ 217

तदुद्धारसमुद्युक्तं विष्णुं मामप्ययं यमः ।
शिवद्रोहीति मत्वैव मां ग्रहीष्यति सर्वथा ॥ 218

तद्धस्तपतितः कोऽपि न मुक्तोऽद्यापि दृश्यते ।
अतो मन्मथमोक्षार्थो यत्नः सर्वोऽफलो ध्रुवम् ॥ 219

तूष्णीमास्स्वेति तां प्राह लक्ष्मीं लक्ष्मीपतिः प्रभुः ।
अतो मद्धस्तपतितः सुरोऽपि शिवनिन्दकः ॥ 220

भुङ्क्ते दुःखानि निरयेष्वाचन्द्रार्कं न संशयः ।
अनन्तब्रह्महत्याभिर्यावद्दुःखमवाप्यते ॥ 221

ततोऽपि दुःखमधिकं प्राप्यते शिवनिन्दकैः ।
ब्रह्महत्या कृता येन तस्यैव नरके स्थितिः ॥ 222

शिवनिन्दापरो यस्तु न तस्यैव निरयो भवेत् ।
किन्तु तद्वंशजानां च नरको भवति ध्रुवम् ॥ 223

शिवनिन्दासमं पापं न भूतं न भविष्यति ।
शिवनिन्दकगेहे यो जलं पिबति मोहतः ॥ 224

तप्तकृच्छ्रं तदा कार्यं तत्पापस्य विशुद्धये ।
त्यक्तभस्मत्रिपुण्ड्रस्य गृहे भुक्त्वा तु मोहतः ॥ 225

प्रायश्चित्तं द्वादशाब्दं कर्तव्यमतियत्नतः ।
त्यक्तभस्मत्रिपुण्ड्रस्य यदि दृष्टं मुखं भ्रमात् ॥ 226

तदा सूर्यं विलोक्यादौ सचेलः स्नानमाचरेत् ।
त्यक्तभस्मत्रिपुण्ड्रस्य स्पर्शो यदि भवेद्भ्रमात् ॥ 227

स्नात्वोपवासः कर्तव्यः शिवपूजापुरःसरम् ।
त्यक्तभस्मत्रिपुण्ड्रेण यद्यालापः कृतो भवेत् ॥ 228

तदोपवासः कर्तव्यस्त्र्यहं वै ब्रह्मवादिभिः ।
विभूतिधारणं त्यक्त्वा यदि भुङ्क्ते प्रमाद्द्विजः ॥ 229

तदा तदन्नं निष्कास्य चरेच्चान्द्रायणं व्रतम् ।
शिवपूजां विहायैव यदि भुङ्क्ते प्रमाद् द्विजः ॥ 230

तदा तदन्नं निष्कास्य चरेच्चान्द्रायणं व्रतम् ।
रुद्राभिषेकसलिलमपीत्वा यदि भुज्यते ॥ 231

तदा तदन्नं निष्कास्य चरेच्चान्द्रायणं व्रतम् ।
रुद्राक्षधारणं मुक्त्वा यदि भुङ्क्ते प्रमादतः ॥ 232

तदा तदन्नं निष्कास्य चरेच्चान्द्रायणं व्रतम् ।
शिवपूजादिकं त्यक्त्वा ये मृताः पापिनो जनाः ॥ 233

त एव तेषु नरकेष्वानीयानीय पातिताः ।
अत्यन्तसुलभं ये तु त्यजन्तीश्वरपूजनम् ॥ 234

पतन्ति घोरनरकेष्वेतेषु जडबुद्धयः ।
अत्यन्तसुलभं पुण्यं शिव इत्यक्षरद्वयम् ॥ 235

यैस्तु नोच्चरितं तस्मादेते नरकपातिनः ।
शिवमन्त्रोष्णकिरणो नरकध्वान्तनाशकः ॥ 236

पुरा कश्चिन्नराधीशो मित्रराडिति विश्रुतः ।
युवा पुष्टतनुर्गौरः सुन्दरः क्रूरशासनः ॥ 237

तद्रक्षितगजाऽश्वानां न सङ्ख्या दृश्यते मया ।
सर्वसामन्तभूपालास्तदाज्ञाकारिणः सदा ॥ 238

कदाचित्स तु भूपालः स्वपत्नीमतिसुन्दरीम् ।
तिरस्कृत्य स्वर्गनारीं दृष्ट्वा वचनमब्रवीत् ॥ 239

**राजोवाच -**

आयाहि सुभगे भद्रे रात्रिर्जाताऽद्य भूयसी ।
मामालिङ्ग्य मुदं देहि येन तुष्टो भवाम्यहम् ॥ 240

त्वदालिङ्गनजं सौख्यं नान्याश्लेषात्प्रजायते ।
कामोद्दीपनमेतत्ते सौन्दर्यं प्रीतिवर्धन ॥ 241

अतिसौख्यकरं चित्तं ध्यायते सर्वदा मया ।
इत्युक्तं तद्वचः श्रुत्वा सुभगा सा मनोहरा ॥ 242

जगाद वचनं चारु सद्यो वैराग्यसाधकम् ।

**सुभगोवाच -**

शङ्कराचंनकालोऽयं कर्तव्यं शङ्कराचंनम् ॥ 243

अयं न भोगकालोऽतो मया नागम्यतेऽधुना ।
कुरु त्वमपि राजेन्द्र महादेवस्य पूजनम् ॥ 244

वृथाकालो न नेयोऽयं परलोकार्थिभिर्यतः ।
उपेन्द्रेन्द्रादयो देवा गन्धर्वा मुनिसत्तमाः ॥ 245

अस्मिन् ाले महादेवं पूजयन्ति प्रयत्नतः ।
या जगज्जननी साक्षाद्भवानी सापि शङ्करम् ॥ 246

सम्पूजयनि यत्नेन साधनैर्बहुभिर्मुदा ।
गन्धर्वोरगयक्षाद्या विविधैः साधनैः शुभैः ॥ 247

पूजयन्ति प्रयत्नेन सर्वदेवोत्तमं शिवम् ।
अयं सोमान्वितः कालस्त्रयोदश्यापि संयुतः ॥ 248

अतोऽधुना महादेवः पूजनीयः प्रयत्नतः ।
अर्धरात्रार्चनं शम्भोः सोमप्रियकरं यतः ॥ 249

ततः पूज्योऽधुना शम्भुर्बिल्वपत्रादिसाधनैः ।
त्वयापि शङ्करः पूज्यः सविशेषं प्रयत्नतः ॥ 250

मा विलम्बस्व मोहेन सावधानो भवाधुना ।
करिष्यसि सदा भक्त्या यदि शङ्करपूजनम् ॥ 251

तदा विपुलभोगान्ते लभ्यो मोक्षस्त्वया ध्रुवम् ।
यमभ्यर्च्य महादेवं वैकुण्ठं प्राप केशवः ॥ 252

तमनाद्यन्तमीशानं शङ्करं शरणं व्रज ।
राजन् मा कुरु भोगेच्छां राज्येच्छामपि सन्त्यज ॥ 253

कुरु यत्नेन सततं श्रीमहादेवपूजनम् ।
विहाय चन्दनं राजन् भस्मनाङ्गं विलेपय ॥ 254

विहाय रत्नाभरणं कुरु रुद्राक्षधारणम् ।
शृणु शैवीं कथां रम्यां कथामन्यां परित्यज ॥ 255

जप पञ्चाक्षरं शैवं महापातकनाशनम् ।
अनित्यमिदमैश्वर्यं राज्यं ते दुःखदायकम् ॥ 256

त्यजैश्वर्यमिदं भक्त्या पूजयस्व महेश्वरम् ।
मयि मा कुरु राजेन्द्र स्नेहं दुःखैकसाधनम् ॥ 257

स्त्रीवश्यः सर्व एवापि नरकं व्रजति ध्रुवम् ।
मांसग्रन्थी स्तनावेतौ किमत्रास्ति वदस्व मे ॥ 258

विदारिते मांसमात्रं निःसरिष्यति सर्वथा ।
श्लेष्मागारं मुखं पश्य नेत्रे कज्जलकल्पिते ॥ 259

त्यज मोहं कुरु प्रीतिं शिवे तत्पूजनेऽपि च ।
यौवनभ्रान्तचित्तेन त्वया त्यक्तं शिवार्चनम् ॥ 260

तेन दोषेण नरके वासस्ते सम्भविष्यति ।
राजन् शिवार्चनत्यागात्पतन्ति नरके जनाः ॥ 261

प्राप्तानि नरकाण्यद्धा पुरा त्यक्तशिवार्चनैः ।
मित्रराडिति तद्वाक्यं श्रुत्वा वचनमब्रवीत् ॥ 262

कथं ज्ञातमिदं सर्वं इति सा तमुवाच च ।
अहं पूर्वभवे राजन् किराताधमकन्यका ॥ 263

कृतं हि जीवनं पूर्वं काष्ठविक्रयणादिना ।
न प्राप्तमन्नं सम्पूर्णं कदाचिदपि सर्वथा ॥ 264

वस्त्रस्य वार्ता का तत्र पत्रं तु परिधीयते ।
वने गतं मया पूर्वं काष्ठान्याहर्तुमेकदा ॥ 265

तत्र शैवो मया दृष्टः शिवपूजाविशारदः ।
नाट्यं कृत्वा स्थितं तत्र शङ्कराग्रे प्रयत्नतः ॥ 266

तं वीक्ष्य शाङ्करं नत्वा मया नाट्यं कृतं मुदा ।
ततो दैवादभूदस्मिन्नरण्ये मरणं मम ॥ 267

तदानीमागतं मह्यं पुष्पकं स्वर्गलोकतः ।
तत्र गत्वा स्वर्गलोके बहुकालं स्थितं मया ॥ 268

ततो नराधिनाथस्य सम्भूतमुदरे मया ।
रम्भाद्याश्च जिताः सर्वाः सौन्दर्येण मया ध्रुवम् ॥ 269

शिवप्रणामनाट्याभ्यां निरन्तरसुखं मया ।
प्राप्तमन्ते मया मुक्तिः प्राप्तव्या सत्यमुच्यते ॥ 270

अतीतानागतज्ञानं महादेवप्रसादतः ।
मम जातं ततः सर्वं स्मर्यते नात्र संशयः ॥ 271

स्वमुखं दृश्यते सम्यक् विमले दर्पणे यथा ।
तथातीतानागतार्थाः दृश्यन्ते सर्वदा मया ॥ 272

प्रणामनर्तनादीनि महादेवस्य पूजनम् ।
ततस्तत्पूजया सर्वं मयेदं ज्ञायतेऽधुना ॥ 273

जातिस्मरत्वं सौभाग्यं मोक्षश्च शिवपूजया ।
प्राप्यते नात्र सन्देहः श्रुद्धत्स्व पृथिवीपते ॥ 274

एकवारं नर्तनेन प्रणामेन च शङ्करः ।
सौभाग्यमीदृशं मह्यमतिकारुणिको ददौ ॥ 275

मया त्वहर्निशं साम्बः पूज्यते बहुसाधनैः ।
इदानीं तु विशेषेण पूज्यते पार्वतीपतिः ॥ 276

इत्युदीरितमाकर्ण्य रोमाञ्चिततनुस्तदा ।
कोऽहं पूर्वभवे सर्वं वदेत्याह स भूपतिः ॥ 277

सुभगा उवाच -

भद्र त्वमसि राजेन्द्र पूर्वजन्मनि दुर्बलः ।
अतिकुत्सितवृत्त्यैव जातं हि तव जीवनम् ॥ 278

क्रयार्थं बिल्वपत्राणि समानेतुं त्वया पुरा ।
वनं प्रविष्टं गहनं बिल्ववृक्षसमाकुलम् ॥ 279

तत्रैव बिल्वपत्राणि त्रोटितानि त्वया वने ।
बहूनि तानि सङ्गृह्य परावृत्तं त्वया वनात् ।। 280

मध्येमार्गं तदा चोरा बह्वः समुपागत्ताः ।
तद्दर्शनेन भीतिस्ते बभूव प्राणहारिणी ।। 281

सर्वाणि बिल्वपत्राणि त्यक्त्वैव त्वरया त्वया ।
प्रपलाय्य गतं भीत्या तद्भयेन मृतं तथा ।। 282

त्यक्तानि बिल्वपत्राणि शिवलिङ्गे तु नार्मदे ।
पतितानि तदा तेन सन्तुष्टः पार्वतीपतिः ।। 283

ततः परं लिङ्गरूपी स्वयमेव मनोहरः ।
कृपालुः पार्वतीयुक्तस्तव प्रत्यक्षतां गतः ।। 284

वरः पृष्टस्त्वया राजन् प्रत्यक्षे परमेश्वरे ।
राज्यं देहि महादेव मुक्तिं चेति प्रणम्य तम् ।। 285

ततः स पार्वतीनाथस्तथास्त्वित्यनुमोद्य च ।
तत्रैवान्तर्दधे लिङ्गे बिल्वपत्रादिवेष्टिते ।। 286

ततः परं समुत्पन्नं त्वया क्षोणीधरोदरे ।
भुज्यन्ते राज्यभोगाश्च शङ्करानुग्रहात्सदा ।। 287

त्वया ज्ञात्वा बिल्वपत्रैर्न महेशार्चनं कृतम् ।
तथापि भाग्यमतुलं ददौ तुभ्यं सदाशिवः ।। 288

एतादृशः कृपासिन्धुस्त्वया नाभ्यर्चितः शिवः ।
यत्प्रसादेन सौभाग्यं प्राप्तमेवं त्वयाधुना ॥ 289

मोहं त्यजाधुना राजन् पूजयस्व महेश्वरम् ।
नित्यमव्यभिचारेण शङ्करं शरणं व्रज ॥ 290

इत्युक्तः स ततो राजा त्यक्त्वा सम्मोहमव्ययः ।
अत्यन्तसावधानेन चकार शिवपूजनम् ॥ 291

शिवस्थानानि बहुधा कारयामास भूपतिः ।
रत्नपुष्पैर्महादेवं पूजयामास यत्नतः ॥ 292

सुवर्णबिल्वपत्रैश्च दशलक्षमितैर्नृपः ।
पूजयामास यत्नेन हेमपद्मैश्च सन्ततम् ॥ 293

अन्यैश्च पुष्पैरनिशं सङ्ख्याहीनैर्महेश्वरम् ।
पूजयामास यत्नेन बिल्वपत्रैश्च कोमलैः ॥ 294

दीपाँल्लक्षावधि प्रीत्या ददावन्वहमादरात् ।
नैवेद्यानि प्रयत्नेन स बहूनि ददौ नृपः ॥ 295

एवं शिवार्थमखिलं रत्नागारं निवेद्य सः ।
शिवमेव सदा ध्यात्वा स्थितः शिवपरायणः ॥ 296

ततस्तस्याभवत्पुत्रः शिवपूजापरायणः ।
तस्मिन्निधाय तद्राज्यं सपत्नीको वनं ययौ ॥ 297

तत्रापि स वने भक्त्या बिल्वपत्रैर्महेश्वरम् ।
पूजयामास सततं सपत्नीको जितेन्द्रियः ॥ 298

नवानि बिल्वपत्राणि सम्पाद्य गिरिजापतिम् ।
पूजयित्वा प्रणम्येशं नर्तनं च चकार सः ॥ 299

ततः कदाचित्सम्पूज्य बिल्वपत्रैर्महेश्वरम् ।
पञ्चाक्षरजपं कुर्वन् सपत्नीको मृतो नृपः ॥ 300

तदैव करुणासिन्धुर्महेशो वीक्ष्य तं नृपम् ।
सहस्रं प्रेषयामास गणानां पुष्पकं तदा ॥ 301

ततः पुष्पकमारुह्य सपत्नीको नराधिपः ।
अनेनैव हि मार्गेण गतः शङ्करसन्निधिम् ॥ 302

तदा दुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ।
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥ 303

स पूजितो मया राजा पुष्पैर्नानाविधैस्तथा ।
तदानीमेवमेवाह वचनं प्रीतमानसः ॥ 304

राजोवाच -

यम शिक्षय यत्नेन शिवपूजापराङ्मुखान् ।
इत्युक्त्वा स ययौ पूर्वं सोत्साहं मुदिताननः ॥ 305

बहुभिर्बहुधा प्रोक्तमेवं शङ्करपूजकैः ।
अयं तु ब्राह्मणः पूर्वं वेदशास्त्रविशारदः ॥ 306

अनेन बहवो यज्ञाः कृताः स्वर्गार्थमादरात् ।
ततः कदाचिदालोक्य शैवं भस्मविभूषितम् ॥ 307

जगाद वचनं मोहगर्वितो दुर्वचं वचः ।
हन्ताङ्ग भस्मनानेन क्रियते श्वेतवर्णकम् ॥ 308

इत्युक्तं तद्वचः श्रुत्वा शिवभक्तोऽतिदुःखितः ।
अश्रुपूर्णमुखो भूत्वा हाहेति च रुरोद च ॥ 309

तादृशं खिन्नहृदयं तं दृष्ट्वा शैवपुङ्गवम् ।
बभाषे वचनं राजा देवात्तत्र समागतः ॥ 310

**राजोवाच -**

किमासीदधुना ब्रह्मन् किं वा दुःखस्य कारणम् ।
इत्युक्तं राजवचनं श्रुत्वा शैवोत्तमस्तदा ॥ 311

प्रदर्श्यैनमनेनोक्तं वचस्तस्मै न्यवेदयत् ।
ततः स राजा धर्मज्ञानाहूय द्विजपुङ्गवान् ॥ 312

एतस्य कीदृशी शास्तिः कर्तव्येत्यब्रवीत्तदा ।
ततस्ते ब्राह्मणाः सर्वे धर्ममार्गप्रवर्तकाः ॥ 313

शूलारोपोऽस्य कर्तव्यः शीघ्रमित्यूचिरे तदा ।
इति तद्वचनं श्रुत्वा धर्मज्ञः स नराधिपः ।। 314

तस्मै चकार शीघ्रेण शूलारोपं प्रयत्नतः ।
शैवदुःखप्रदो मर्त्यः शिवपूजापराङ्मुखः ।। 315

आततायीति विज्ञेयस्ततो हन्तव्य एव सः ।
यद्याततायिनं राजन्न हन्याद्धर्मवित्तमः ।। 316

यात्येव नरकं घोरं यावदाचन्द्रतारकम् ।
अत एव हि धर्मज्ञा लोभमोहविवर्जिताः ।। 317

अशैवानां प्रयत्नेन कुर्वन्त्येव हि शासनम् ।
अशैवा बहवो भूमौ भविष्यन्ति कलौ युगे ।। 318

ते पातनीया यत्नेन नरकेषु मया ध्रुवम् ।
शिवं विहाय ये चान्यं पूजयन्ति नराधमाः ।। 319

अशैवास्त इति ज्ञेयास्ते घोरनरकाश्रयाः ।
अशैवानामघोरेभ्यो नरकेभ्यो न निर्गमः ।। 320

अतः प्रयत्नतो नित्यं कर्तव्यं शङ्करार्चनम् ।
शैवो भूत्वा शिवो नित्यं भजनीयः प्रयत्नतः ।। 321

आर्यावर्ते पुरा कश्चिद्वेदवेदाङ्गपारगः ।
शिवैकशरणो नित्यं शिवपूजापरायणः । 322

रुद्राक्षमालाभरणो भस्मोद्धूलितविग्रहः ।
एतादृशं द्विजश्रेष्ठं कश्चित्षोडशवार्षिकः ॥ 323

वेदाध्ययनसम्पन्नो ददर्श वनमध्यगम् ।
तदानीं तं द्विजं दृष्ट्वा शिवपूजारतं मुदा ॥ 324

प्रणम्य विनयाद्वाचमुवाच स कृताञ्जलिः ।
स्वामिन्सर्वज्ञ विप्रेन्द्र मोक्षोपायं वदस्व मे ॥ 325

प्रणतोऽस्मि कृपासिन्धो शिक्षयस्व यथोचितम् ।
इति तद्वचनं श्रुत्वा शिवपूजां समाप्य सः ॥ 326

उवाच वचनं चारु सर्वलोकहितावहम् ।
ब्राह्मण शृणु मद्वाक्यमप्रमादेन सादरम् ॥ 327

श्रुतिसिद्धं वदिष्यामि मोक्षोपायमनाकुलम् ।
यामिन्याः पश्चिमे यामे कुरु शङ्करचिन्तनम् ॥ 328

ततः शौचादिकं कृत्वा कुरु स्नानं विधानतः ।
स्नानकाले महादेवं स्मर साम्बमतन्द्रितः ॥ 329

परिधाय ततो वस्त्रं भस्मनोद्धूलनं कुरु ।
ततः शिरोललाटादौ यथामन्त्रं यथाक्रमम् ॥ 330

त्रिपुण्ड्रधारणं श्रौतं कुरु ध्यायन्नुमापतिम् ।
जाबालमतमाश्रित्य कुरु रुद्राक्षधारणम् ॥ 331

ततः कुरु यथायोग्यं सन्ध्याकार्यं ततो जपम् ।
होमादिकं च कर्तव्यं यथायोग्यं घृतादिभिः ॥ 332

ततो यत्नेन विधिवन्महादेवार्चनं कुरु ।
रुद्राध्यायेन सततमभिषेकं कुरु प्रभो ॥ 333

विल्वपत्रैर्महादेवं पूजयस्वातिभक्तितः ।
शिव पञ्चाक्षरेणैव बिल्वपत्रार्पणं कुरु ॥ 334

पञ्चाक्षरो महामन्त्रः सर्वमन्त्रशिरोमणिः ।
तेन सम्पूजितः शम्भुर्भुक्तिं मुक्तिं प्रयच्छति ॥ 335

वैदिकोऽयं महामन्त्रस्ततो वैदिकपूजनम् ।
शिव प्रियकरं तस्मात्तेनपूजय शङ्करम् ॥ 336

फलेनान्येन (न्नेन) वा शम्भोः कुरु नैवेद्यमादरात् ।
प्रदक्षिणविधानेन कुरु सम्यक्प्रदक्षिणम् । 337

साष्टाङ्गान्कुरु यत्नेन प्रणामान् श्रीमहेशितुः ।
शङ्कराग्रे प्रयत्नेन कुरु नर्तनमादरात् ॥ 338

पश्य नित्यं प्रयत्नेन पूजितं साम्बमीश्वरम् ।
पिब प्रीत्या च भक्त्या च शिवनिर्णेजनोदकम् ॥ 339

सायङ्कालेऽपि यत्नेन पूजयस्वैवमीश्वरम् ।
पूजां प्रदोषकालीनां दृष्ट्वा हृष्टो भव द्विज ॥ 340

श्रृणु यत्नेन सततं महादेवकथाः शुभाः ।
शिवबुद्धिं कुरु प्रीत्या शैवेषु सततं द्विज ॥ 341

संसारतरणोपायः शङ्करस्यैव पूजनम् ।
ततस्त्वं सर्वभावेन शिवं पूजय शङ्करम् ॥ 342

यमः उवाच -

इत्युक्तं तद्वचः श्रुत्वा सन्तुष्टहृदयस्तदा ।
सर्वमन्यत्परित्यज्य शिवपूजापरो भव ॥ 343

ततः स बालकस्तत्र बिल्वपत्रैर्मनोहरैः ।
समर्चयन्महादेवमुवास प्रीतमानसः ॥ 344

स शङ्करैकशरणः सर्वदा शङ्करार्चकः ।
शङ्करं पूजयन्नेव जहौ प्राणान्कदाचन ॥ 345

ततस्तस्मै महेशेन विमानं प्रेषितं मुदा ।
स विमानं समारुह्य ययौ शङ्करसन्निधिम् ॥ 346

शिव एव सदा ध्येयो मुक्तिकामैरहर्निशम् ॥ 347

ये मामनन्यशरणाः सितभस्मफाला
रुद्राक्षकङ्कणलसत्करदण्डयुग्माः ।

सम्पूजयन्त्यहरहः श्रुतितत्वभूतं
तानेव घोरनरकादहमुद्धरिष्ये ॥ 348

॥ इति श्रीशिवरहस्ये सप्तमांशे शिवगौरीसंवादो नाम अष्टादशोऽध्यायः ॥



## ॥ एकोनविंशोऽध्यायः ॥

शिव उवाच -

शिवे दक्षिणकैलासो विलासस्याश्रयो मम ।
स यथोत्तरकैलासस्तथैव सुखदः सदा ॥ 1

सुवर्णमुखरी नाम नदी तत्रास्ति शोभना ।
यत्तीर्थस्नानमात्रेण मुच्यते सर्वकिल्बिषैः ॥ 2

तत्तीरे कोटिशः सन्ति बिल्ववृक्षा मनोहराः ।
अखण्डबिल्वपत्राणि राजन्ते यत्र कोटिशः ॥ 3

सुवर्णमुखरीतीरे बहवः सन्ति शाङ्कराः ।
ते सर्वे नियताहारा भस्मोद्धूलितविग्रहाः ॥ 4

शिवपूजारताः सर्वे निरीहा निर्मलाशयाः ।
शिवनामैकनिरतास्त्यक्तभोगा निराकुलाः ॥ 5

ध्यायन्ति ते महादेवं मामनाद्यन्तमव्ययम् ।
निष्कलं निर्गुणं शान्तं शिवमक्षरमच्युतम् ॥ 6

सर्वाधारमनाधारं विदित्वा मां वसन्ति ते ।
तत्र त्यक्ततनुर्मर्त्यः कीटो वा मशकोऽथवा ॥ 7

भुक्त्वा भोगान्यथाकामं मत्स्वरूपं प्रयाति च ।
तत्रास्ति पर्वतः कश्चित्स मदात्मक एव हि ॥ 8

स तु लिङ्गमयो यस्माल्लिङ्गाकारः स पर्वतः ।
तस्य शैलस्य विधिवद्वैशाखे माघमसि वा ॥ 9

कृत्वा प्रदक्षिणं सम्यग्ब्रह्महत्या विमुच्यते ।
कर्पूरगौरं तल्लिङ्गं पश्चिमाभिमुखं सदा ॥ 10

वर्णान्तरं प्रतियुगं तस्य लिङ्गस्य जायते ।
विष्णुब्रह्मादयो देवा सततं शिवपूजकाः ॥ 11

तल्लिङ्गमतियत्नेन पूजयन्ति मुमुक्षवः ।
सुवर्णमुखरीतार्थे स्नात्वा सम्यग्यथाविधि ॥ 12

अशेषपापनिर्मुक्ता भविष्यन्ति न संशयः ।
स्नात्वा तत्र विधानेन पितॄन्सन्तर्प्य वारिणा ॥ 13

अन्नादिभिश्च सन्तर्प्य सर्वपापैः प्रमुच्यते ।
तत्तीरे श्राद्धकरणा पितॄणामृणबन्धनात् ॥ 14

मुच्यते मनुजः सद्यः पद्मपत्रमिवाम्भसा ।
तत्र स्नात्वा विधानेन स्वशक्त्या शिवयोगिने ॥ 15

देयं सुवर्णं यत्नेन मत्प्रीत्यर्थमतन्द्रितैः ।
भोजनीयः प्रयत्नेन शिवयोगी यथासुखम् ॥ 16

स दुग्धपरमान्नाद्यैर्यथेष्टं घृतमिश्रितैः ।
शिवक्षेत्रमिदं यस्मादत एवात्र शाङ्कराः ॥ 17

भोजनीयाः प्रयत्नेन तोषणीया धनादिभिः ।
एकस्मिन्भोजिते शैवे भोजिताः कोटिशो द्विजाः॥ 18

यतः शैवमुखद्वारा भुज्यते गिरिजे मया ।
परन्तु शुद्धया भक्त्या विनयेन विचक्षणैः ॥ 19

भोज्यते यदि शैवेन्द्रस्तदा तद्भुज्यते मया ।
शिवयोगिनि सन्तुष्टे सन्तुष्टोऽस्म्यहमम्बिके ॥ 20

शिवयोगिस्वरूपेण सञ्चराम्यहमेव हि ।
शिवक्षेत्रेषु सर्वेषु पूज्या हि शिवयोगिनः ॥ 21

अहं तु पूजितः सत्यं शिवयोगिनि पूजिते ।
तत्रार्द्राकृत्तिकायोगे सन्ध्यायामष्टमीदिने ॥ 22

सम्पूज्य मां बिल्वपत्रैर्ब्रह्महत्या विमुच्यते ।
वैशाखपौर्णमास्यां यः सम्पूजयति तत्र माम् ॥ 23

व्यतीपातेन युक्तायां स मोक्षमधिगच्छति ।
यो मां बिल्वदलैस्तत्र कोमलैः पूजयिष्यति ॥ 24

स सद्य एव संसारान्मुक्तो भवति सर्वथा ।
शेषः प्रत्यहमागत्य तत्र रत्नैर्मनोहरैः ॥ 25

तदेव लिङ्गममलं सम्पूजयति सादरम् ।
अत्युत्तमैर्लक्षरत्नैर्भक्त्या प्रीत्याऽन्वहं मुदा ॥ 26

तत्र कश्चिद्गजो नित्यं नियमेनैव सादरम् ।
तुण्डेन जलमानीय मुदा मामभिषिञ्चति ॥ 27

ततश्च बिल्वपत्राणि भक्त्यादाय स्वशुण्डया ।
मामर्चयति यत्नेन पुष्पैर्नानाविधैरपि ॥ 28

अयं यदा समायाति मत्पूजार्थमिह द्विप ।
तन्पूर्वं फणिराड्रत्नैः पूजां कृत्वा स गच्छति ॥ 29

तानि रत्नानि दृष्ट्वाऽयं हस्ती ग्रावाभिशङ्कया ।
दूरीकरोति यत्नेन सकोपः सत्वरं शिवे ॥ 30

एवं प्रत्यहमेवायं रत्नानि विमलान्यपि ।
दूरीकृत्वैव बिल्वैर्मां पूजयामास भक्तितः ॥ 31

गजस्य चेष्टितं दृष्ट्वा विस्मितो भुजगेश्वरः ।
केन दूरीकृतान्येतद्रत्नानि विविधान्यपि ॥ 32

एवं विचिन्तयन्भूरि शेषः शोकवशं गतः ।
शिवपूजाविधाने यत्पातकं समुपार्ज्यते ।। 33

तत्कृते दुःखलेशोऽपि कस्य वा नोपजायते ।
इत्थं विचिन्त्य भूयोऽपि रत्नैर्नानाविधैः फणी ।। 34

पूजयित्वा च मां भक्त्या याति लोकं स्वकं पुनः ।
एवमेव समागत्य पूजयित्वा पुनः पुनः ।। 35

स यात्यायाति सततं पुनरायाति याति च ।।
उभाभ्यां हस्तिनागाभ्यामेवमन्वहमादरात् । 36

लिङ्गरूपे मयि प्रीत्या पूजा विरचिता मुहुः ।
ततः कदाचित्सफणो पूजां कृत्वा प्रयत्नतः । 37

कोऽयमायाति तं द्रक्ष्ये नूनमद्येति तस्थिवान् ।
शिवपूजाविहन्तारं निहनिष्यामि तत्वतः ।। 38

देवो वा मानुषो वास्तु यो वा को वाभवत्वयम् ।
इति निश्चित्य नागेन्द्रः क्वचित्कोणे निलीय सः ।। 39

तस्थौ तदा द्विपेन्द्रोऽपि पूजार्थं समुपागतः ।
द्विपोऽपि तानि रत्नानि व्यपनीय स्वशुण्डया ।। 40

बिल्वपत्रैः प्रसूनैश्च पूजां कर्तुं प्रचक्रमे ।
द्विपस्तस्मिन्दिने भूयो विल्वपत्राण्युपाहरत् ।। 41

पूजयामास मां भक्त्या शिवमेकमनामयम् ।
तमेवं वीक्ष्य नागेशः सत्वरं सूक्ष्मरूपधृक् ।। 42

तद्दन्तितुण्डद्वारेण शिरोमध्यं जगाम सः ।
ततस्तद्दंशितो दन्ती द्वारस्तम्भे शिलामये ।। 43

शिरः सङ्घर्षयामास सक्रोधं क्रोधसंयुतः ।
ततः सङ्घर्षणेनैव स्फुटितं तच्छिरस्तदा ।। 44

निर्जगाम ततो भोगी नागेन्द्रशिरसस्तदा ।
ततो विषार्दितो दन्ती मृतो भूमौ पपात च ।। 45

पतिते दन्तिवर्येऽस्मिन्नागे च गतजीविते ।
प्रादुरास तदा देवि सद्योऽहं लिङ्गमध्यतः ।। 46

जीवयामास तौ चोभौ भक्तिनिष्ठौ मयि प्रिये ।
स्तुतस्ताभ्यां ततो यत्नात् भक्तिपूर्वं सुरेश्वरि ।। 47

वरोऽपि वव्रे यत्नेन तदायं परमोत्तमः ।
उभयोरपि नाम्नेदं लिङ्गं प्रख्यातिमेत्विति ।। 48

नामानुवृत्तिरस्त्वीश पृथिव्यामावयोः सदा ।
मुक्तिस्त्वद्दर्शनादेव भविष्यत्यद्य सर्वथा ।। 49

इत्युक्तं तद्वचः श्रुत्वा वरो दत्तस्तदा शिवे ।
तयोर्मुक्तिरभूद्देवि मत्साक्षात्कारतस्ततः ।। 50

पार्वत्युवाच -

महादेव गजस्यास्य भक्तिरेषा त्वयीदृशी ।
कथं जाता भोगिनोऽपि तद्वदस्व महेश्वर ॥ 51

अनन्तजन्मभिर्घोरं यदि तप्तं तपस्तदा ।
त्वयि भक्तिर्महादेवे भविताह्यनपायिनी ॥ 52

शरीरं यस्य चरमं तस्यैव त्वयि शङ्करे ।
भक्तिर्भवति निर्व्याजा या मोक्षफलदायिनी ॥ 53

येषां संसारविच्छित्तिर्यद्देहागमने सति ।
त एव सर्वभावेन शरणं यान्ति शङ्करम् ॥ 54

सोत्कण्ठं नीलकण्ठेति श्रीकण्ठेति वदन्ति ये ।
तेषां शरीरं चरमं सत्यमित्यस्ति हि श्रुतिः ॥ 55

विश्वाधिक महादेव विश्वेशेति वदन्ति ये ।
तेषां शरीरं चरमं .... .... ॥ 56

देवतासार्वभौमेति शङ्करेति वदन्ति ये ।
तेषां शरीरं चरमं .... .... ॥ 57

सर्वोत्तमोत्तमानन्त श्रीशर्वेति वदन्ति ये ।
तेषां शरीरं चरमं .... .... ॥ 58

विदारितनृसिह्मेति श्रीरुद्रेति वदन्ति ये ।
तेषां शरीरं चरमं सत्यमित्यस्ति हि श्रुतिः ॥ 59

एवं सति द्विपो नित्यं बिल्वपत्रजलादिभिः ।
करोति पूजनं नित्यं कथं त्वयि महेश्वर ॥ 60

कोऽयं पूर्वभवे स्वामिन् किमनेन कृतं तपः ।
यच्छरीरस्य विगमे सद्यो मुक्तिमुपेयिवान् ॥ 61

नागोऽप्ययं सदा भक्त्या रत्नैरप्युत्तमैर्मुदा ।
पूजयत्यार्द्रभावेन लिङ्गरूपे त्वयि प्रभो ॥ 62

एकैकस्य च रत्नस्य मूल्यमेव न विद्यते ।
तादृशानि समानीय करोति कथमर्चनम् ॥ 63

एतत्सर्वं विशेषेण श्रोतव्यमिति वर्तते ।
वद सर्वज्ञ विश्वेश करुणाकर शङ्कर ॥ 64

**सूत उवाच -**

इत्युक्तं तद्वचः श्रुत्वा सर्वदेवशिरोमणिः ।
उवाच वचनं चारु श्रोत्रानन्दकरं परम् ॥ 65

**सदाशिव उवाच -**

हस्ती पूर्वभवे देवि ब्राह्मणो वेदपारगः ।
मलयाचलदेशस्थो दरिद्रो व्याधिपीडितः ॥ 66

अन्यार्थं शिवभूताग्रामनेनोपोषणं कृतम् ।
कृतं जागरणं रात्रौ तेन यामचतुष्टयम् ।। 67

रात्रावन्यकृतां पूजां शिवलिङ्गे मदात्मके ।
ददर्शायमतिप्रीत्या दीपमालां च तत्कृताम् ।। 68

ततः कदाचित्सर्पेण दष्टोऽभूत्स ततो द्विजः ।
ततोऽयमभवद्दन्ती धर्मविक्रयदोषतः ।। 69

पूजा विलोकिता तेन रात्रौ भक्तिपुरःसरम् ।
तेन जातिस्मरो जातो द्विपजन्मन्यपि प्रिये ।। 70

आबाल्यमतियत्नेन मम पूजापरो ह्ययम् ।
कदाचिदपि न त्यक्तमनेन मम पूजनम् ।। 71

बिल्वपत्रैर्जलैः पुष्पैर्मामभ्यर्च्यान्वहं ततः ।
जलं पिबति तन्मह्यं निवेद्यैव प्रयत्नतः ।। 72

स सर्पोऽपि पुरा विप्रो वेदशास्त्रविशारदः ।
मत्पूजानिरतो नित्यं हिमवत्पर्वते स्थितः ।। 73

स ददर्शाथ गन्धर्वं शिवपूजापरायणम् ।
स रत्नैरुत्तमैर्नित्यं मामर्चयति सादरम् ।। 74

द्विजस्तं वीक्ष्य गन्धर्वं प्रणिपत्यभिपूज्य च ।
रत्नानि कुत्र सन्तीति पप्रच्छविनयान्वितः ।। 75

ततस्तद्वचनं श्रुत्वा गन्धर्वस्तमभाषत ।
विनयेन प्रणम्यैनं मदर्चनपरायणम् ।। 76

गन्धर्व उवाच -

समुद्रैः सह सख्यं मे बहुधा वर्तते द्विज ।
तैरेव तानि रत्नानि दीयन्ते मह्यमन्वहम् ।। 77

रत्नैः प्रत्यहमभ्यर्च्य शङ्करं लोकशङ्करम् ।
ततः परं जलादीनि गृह्यन्ते नियमान्मया ।। 78

रत्नैरभ्यर्चिते लिङ्गे सर्वपापैः प्रमुच्यते ।
रत्नपूजनमात्रेण मुक्ताश्च बहवः पुरा ।। 79

भवत्येव हि सन्तुष्टः शङ्करो रत्नपूजया ।
सन्तुष्टे शङ्करे मुक्तिर्हस्तलभ्या हि वस्तुतः ।। 80

नागलोकेऽपि रत्नानि विविधानि भवन्ति हि ।
गच्छ पूजय यत्नेन पाताले नागजन्मना ।। 81

इत्युक्तः स तदा विप्रस्त्यक्त्वा सद्यस्तनुं स्वकाम् ।
नागो बभूव सद्योऽसौ ततो जातिस्मरोऽपि च ।। 82

तदा प्रभृति यत्नेन स नागोऽन्वहमादरात् ।
रत्नैरत्युत्तमैः सम्यक्पूजयामास भक्तितः ।। 83

एतावेतादृशौ देवि शिवपूजापरायणौ ।
तन्नाम्नैव हि तल्लिङ्गं प्रख्यातं मुक्तिदायकम् ।। 84

पश्चिमाभिमुखं लिङ्गं कालहस्तीश्वरं मुदा ।
स्मृत्वापि सर्वपापेभ्यो मुक्तो भवति सर्वथा ।। 85

पश्चिमाभिमुखं लिङ्गं शेषाकारमनुत्तमम् ।
विल्वपत्रैः समभ्यर्च्य प्रयाति मम सन्निधिम् ।। 86

न दृष्टं येन तल्लिङ्गं तस्य जन्म निरर्थकम् ।
नार्चितं येन तल्लिङ्गं जीवन्नपि मृतो हि सः ।। 87

द्रष्टव्योऽतिप्रयत्नेन कालहस्तीश्वरो मुदा ।
यष्टव्यो विल्वपत्राद्यैः संसारभयनाशकः ।। 88

श्रीमद्दक्षिणकैलासे सर्वे ब्रह्मादयः सुराः ।
तिष्ठन्ति देवदेवेशं मामभ्यर्च्यान्विहं मुदा ।। 89

नित्यं श्रीकालहस्तीशं योऽनुसेवितुमिच्छति ।
स मदीयो गणो ज्ञेयो मम प्रियकरश्च सः ।। 90

प्राणविश्लेषसमये कालहस्तीश्वरेति माम् ।
यः स्मरिष्यति भाग्येन तस्मै मोक्षं ददाम्यहम् ।। 91

यं यं कामयते कामं प्राणविश्लेषणक्षणे ।
तस्मिन् क्षेत्रवरे देवि तं तं कामं स विन्दति ।। 92

तन्मोक्षदं कामदं च तत्तु क्षेत्रमनुत्तमम् ।
अत एव हि तत्क्षेत्रं सेवनीयं प्रयत्नतः ॥ 93

पुरा कश्चिद् द्विजः स्नात्वा सुवर्णमुखरीजले ।
पूजयामास यत्नेन कालहस्तीश्वरं मुदा ॥ 94

ततः प्रदक्षिणादीनि कृत्वा सुप्वाप चिन्तया ।
ततः स्वप्नो बभूवैवं तस्य चिन्ताविनाशकः । 95

शिव उवाच -

चिन्तां मा कुरु विप्रेन्द्र क्षेत्रेऽस्मिन्कामदे मम ।
चिन्तितार्थप्रदोऽत्राहं निवसामि न संशयः ॥ 96

आदेहपातं यत्नेन कुरु मत्पूजनं सदा ।
तेनाहं सर्वथा कामान्पूरयिष्ये न संशयः ॥ 97

मामाश्रित्य महादेवं सर्वाभीप्सितदायकम् ।
न कोऽपि चिन्तावशगो जातोऽपि न भविष्यति ॥ 98

तावद्दुःखानि चिन्ता च यावन्मां नोपसेवते ।
मयि संसेविते नित्यं भवत्यानन्द एव हि ॥ 99

अहं त्वनन्यसदृशः सर्वदेवशिखामणिः ।
चिन्ता कार्या न विप्रेन्द्र तवाभीष्टं ददाम्यहम् ॥ 100

मद्भक्ताय सुशीलाय नादेयं मम वर्तते ।
एतादृशीं स्वप्नवार्तां प्रातरुत्थाय यत्नतः ॥ 101

कथयामास शैवेभ्यो विनीतो भक्तिपूर्वकम् ।
ततस्तां स्वप्नवार्तां ते श्रुत्वा शैवोत्तमास्तदा ॥ 102

सन्तोषं परमं प्रापुरपूर्वस्वप्नवार्तया ।
तदाप्रभृति विप्रोऽसौ प्रयत्नेन मदर्चनम् ॥ 103

कृत्वा कदाचिद्विजह्रौ प्राणान्मामनुसंस्मरन् ।
तदानीमेव शैवाय सोऽहं प्रत्यक्षतां गतः ॥ 104

ततः प्रणम्य मां विप्रश्चकार स्तोत्रमादरात् ।
ततः स विप्रो नियान्नत्वा सम्पूज्य मां शिवे ॥ 105

इदमेव वचः प्राह कृताञ्जलिपुटस्तदा ।

**द्विजः -**

अनामयं पदं देहि मह्यं शङ्कर सर्वदा ॥ 106

यत्प्राप्य न निवर्तन्ते कल्पान्तेऽप्यक्षयं पदम् ।
मया न याच्यते शम्भो विष्णुत्वं तेन किं मम ॥ 107

विष्णोरपि यतो घोरो गर्भवासोऽखिलैः श्रुतः ।
संसारोऽपि महानेव विष्णुनाप्यनुभूयते ॥ 108

उत्पत्तिर्बहुधा जाता तस्य मत्स्यादियोनिषु ।
त्वया दत्तोऽस्ति वैकुण्ठः शिवभक्ताय विष्णवे ॥ 109

त्वयि भक्तिः कृता तेन तदर्थं पूर्वमीश्वर ।
अलब्धान्यपदस्यास्य तद्विष्णोः परमं पदम् ॥ 110

अलब्धान्यपदाः केचित्सदा पश्यन्ति सूरयः ।
कदन्नमप्यनन्नस्य परमान्नं यथा तदा(था) ॥ 111

अलब्धान्यपदस्यास्य तद्विष्णोः परमं पदम् ।
नित्यं निष्कण्टकं राज्यं भाग्यवानभिवाञ्छति ॥ 112

क्षुत्पीडितो दरिद्रस्तु कुत्सितान्नानि वाञ्छति ।
अलब्धान्यपदो विष्णुस्तदा वैकुण्ठवाञ्छया ॥ 113

त्वयि भक्ति चकारासौ वैकुण्ठं प्राप केशवः ।
मया वैकुण्ठलोकस्तु मनसापि न गण्यते ॥ 114

तस्मात्पदं महादेव देहि मह्यमनामयम् ।
मया ब्रह्मत्वमिन्द्रत्वं वृतं यवसवत्प्रभो ॥ 115

न तत्र वाञ्छा स्वप्नेऽपि जायते मे महेश्वर ।
इत्युक्तं तद्वचः श्रुत्वा शाङ्करस्य महात्मनः ॥ 116

तस्मै मुक्तिर्मया दत्ता प्रीतिपूर्वं द्विजेशितुः ।
षष्ट्यर्बुदसहस्राणि शाङ्करास्तत्र सर्वदा ॥ 117

अनन्यमनसः सन्ति मदर्चनपरायणाः ।
तेष्वेवमेव ब्रह्मादीन्कदाचिदपि शोभने ॥ 118

शैवा न गणयन्त्येव मदर्चनपरायणाः ।
अस्माभिरत्र मरणान्मुक्तिः प्राप्यैव सर्वदा ॥ 119

अस्माभिर्भारते वर्षे जन्म प्राप्यं तपस्यया ।
तत्राप्यत्युत्तमं क्षेत्रं शैवं प्राप्तमिदं महत् ॥ 120

अस्माभिः सावधानेन भस्मोद्धूलितविग्रहैः ।
नित्यं श्रीकालहस्तीशः पूजनीयो यथाविधि ॥ 121

पश्चिमाभिमुखं लिङ्गमिदमत्यन्तदुर्लभम् ।
एतस्य दर्शनं नैव विना बहुतपस्यया ॥ 122

कालहस्तीश्वरं लिङ्गं पश्चिमाभिमुखं परम् ।
स्वयं यत्नेन महताभ्यर्चनीयं नरैः सदा ॥ 123

सर्वेषां मुक्तिदानार्थमाविर्भूतोऽत्र शङ्करः ।
कालहस्तीश्वरं लिङ्गं बिल्वपत्रैर्जलाप्लुतैः ॥ 124

यः पूजयति सद्भक्त्या न तस्य नरकाद्भयम् ।
शाङ्करेभ्योऽत्र दुग्धान्नं शर्कराघृतसंयुतम् ॥ 125

देयमत्यन्तयत्नेन शिवप्रीत्यर्थमादरात् ।
यत्र कुत्रापि यत्नेन भोजितेऽपि शिवार्चके ॥ 126

तत्रापि शङ्करः प्रीतो भवत्येव न संशयः ।
यद्यत्र शाङ्करो भक्त्या (पू)भोज्यते शङ्करार्चकः ।। 127

तदात्वत्यन्तसन्तुष्टो भवेत्साम्बः सदाशिवः ।
अत्राल्पमपि चेज्जप्तं तदानन्त्याय कल्पते ।। 128

भूरिपुण्यप्रभावेण प्राप्यते क्षेत्रमीदृशम् ।
अस्माभिरतियत्नेन स्थातव्यमिह शाङ्करैः ।। 129

इत्यन्योन्यं वदन्तस्ते मुनयो ब्रह्मवादिनः ।
श्रीमद्दक्षिणकैलासे निवसन्ति मनोरमे ।। 130

तेन तप्तं महद्घोरं तत्रैवातिप्रयत्नतः ।
तेनैव तपसा क्षुब्धाः देवाः सर्वेऽपि शङ्करि ।। 131

भस्मोद्धूलितसर्वाङ्गः स मदर्चनतत्परः ।
मामेव सततं प्रीत्या पूजयन् संस्थितः शिवे ।। 132

तं ददर्श महाशैवं विनीत इति शाङ्करः ।
दृष्ट्वा तं पूजयामास बिल्वपत्रेण भस्मना ।। 133

ततस्तमब्रवीद्विप्रो निष्कल्मषमनाकुलम् ।
मुक्तिक्षेत्रोत्तमं लोके किमस्तीति यथार्थतः ।। 134

ततो निष्कल्मषो विप्रं विनीतं तमभाषत ।
मुक्तिप्रदं महाक्षेत्रं काश्येका श्रुतिसम्मता ।। 135

महेशराजधानीति या सर्वश्रुतिसम्मता ।
सा तु काश्येव नान्येति वदन्ति ब्रह्मवादिनः ॥ 136

व्याचष्टे तारक ब्रह्म यत्र साम्बः सदाशिवः ।
तदेव मुक्तिक्षेत्रेषु श्रेष्ठमित्युच्यते बुधैः ॥ 137

इदं मुक्तिप्रदं क्षेत्रं काशीसम्प्राप्तिसाधनम् ।
ततस्तदेव हि क्षेत्रं मुक्तिक्षेत्रोत्तमोत्तमम् ॥ 138

यत्र देवाधिदेवोऽस्ति विश्वेशो विश्वनायकः ।
तत्तु क्षेत्रोत्तमं नान्यत्क्षेत्रमित्यस्ति हि श्रुतिः ॥ 139

काश्यां विश्वेशरूपेण मुक्तिः पुञ्जीकृता द्विज ।
ततस्तत्सदृशं क्षेत्रं नास्ति नास्त्येव भूतले ॥ 140

यत्र स्थितः पुल्कसोऽपि धिक्करोति शचीपतिम् ।
तत्तु काश्यभिधं क्षेत्रं तत्तु विश्वेश्वराश्रितम् ॥ 141

यत्र वैश्वेश्वरं लिङ्गं दृष्ट्वा पि मुनिपुङ्गवः ।
न गर्भभाक् पुनः सत्यं सत्यं सत्यं न संशयः ॥ 142

तत्रास्ति मणिकर्ण्याख्यं कुण्डं केशवनिर्मितम् ।
तत्र पीत्वा पयो भूयः स्तन्यपो न भविष्यति ॥ 143

मणिकर्ण्यां प्रविष्टो यः स प्रविष्टः शिवोदरे ।
शिवोदरे प्रविष्टो यः स पुनर्जन्मभाङ्नहि ॥ 144

मणिकर्ण्यां वसेद्यस्तु नियमेन समन्वितः ।
स वसत्येव कैलासे नित्यं गणनिषेविते ॥ 145

मणिकर्ण्युपविष्टेन सुखं यदनुभूयते ।
सुखं तु तादृशं विप्र न कुत्राप्यनुभूयते ॥ 146

मणिकर्ण्यां नरः स्नात्वा दृष्ट्वा विश्वेश्वरं प्रभुम् ।
स स्वंश्यैः समायुक्तः प्रयाति शिवमव्ययम् ॥ 147

परन्तु काशीक्षेत्रस्य प्राप्तिरत्यन्तदुर्लभा ।
सा महेशप्रसादेन भवतीत्यनुशुश्रुमः ॥ 148

ततस्तत्प्राप्तये कार्यं प्रयत्नेन तपो महत् ।
सन्तुष्टे तपसात्रीशे काशी प्राप्तिर्भविष्यति ॥ 149

इति तद्वचनं श्रुत्वा ततश्चक्रे तपो द्विजः ।
तत्र दक्षिणकैलासे सर्वकामप्रदे शुभे ॥ 150

पुरा तत्र मम क्षेत्रे कश्चिद्भिल्लो वनाश्रयः ।
पूजयामास यत्नेन बिल्वपत्रादिभिर्मुदा ॥ 151

प्रत्यहं मामनभ्यर्च्य न गृह्णाति जलादिकम् ।
करोति सततं भक्त्या भस्मरुद्राक्षधारणम् ॥ 152

अरण्ये प्रत्यहं तेन स्थीयते वनवासिना ।
तत्र स्थित्वापि मामेव स्मृत्वा स्मृत्वाभिनन्दति ॥ 153

स मह्यं मांसममलमास्वाद्यास्वाद्य भक्तितः ।
उपहारं प्रयत्नेन कल्पयत्यन्वहं मुदा ॥ 154

कुसुमैर्बिल्वपत्रैश्च मुखमध्यस्थितैर्जलैः ।
मामर्चयति यत्नेन भिल्लो भक्तिपुरःसरम् ॥ 155

तं दृष्ट्वा मुनयः सर्वे भिल्लं तादृशमन्वहम् ।
दुःखिता एव तिष्ठन्ति गण्डूषाम्बुसमर्पकम् ॥ 156

उच्छिष्ठोदकमानीय किं नित्यमभिषिञ्चति ।
मांसोपहारं शर्वाय निवेदयति किं जडः ॥ 157

प्रत्यहं नियमेनैव बिल्वपत्रैर्मनोहरैः ।
पूजयत्ययमीशानं शिवलिङ्गस्वरूपिणम् ॥ 158

ईदृशो मुखमध्यस्थैः जलैः समभिषिञ्चति ।
दुर्बुद्धिः कीदृशी जाता कथमस्य वनौकसः ॥ 159

एवं न कार्यं भिल्लेति यद्यस्माभिरिहोच्यते ।
शरपाणिरयं क्रूरः सर्वानेव हनिष्यति ॥ 160

एवं स्थिता मुनिवराः प्रत्यहं दुःखिताः शिवे ।
भिल्लस्तु नित्यं मत्पूजां कुर्वन्नेव व्यवस्थितः ॥ 161

मुनयो न शपन्त्येनं तपोव्ययभयेन ते ।
किञ्चास्मिन् शिवभक्तिं च दृष्ट्वा तूष्णीमवस्थिताः ॥

सदाचारो दुराचारो यो वा को वास्तु शाङ्करः ।
पूजनीयः प्रयत्नेन न तस्मिन्निष्ठुरं वदेत् ॥ 163

कदाचित्सञ्चरन् भिल्लो वनमध्यगतः शिवे ।
भिल्लो घर्मांशुसन्तप्तस्तृषितश्चाभवद्भृशम् ॥ 164

तस्यैव निकटे कुण्डं शीतलोदकसंवृतम् ।
स्थितं तथापि भिल्लेन न पीतं शीतलं जलम् ॥ 165

मया श्रीकालहस्तीशो विल्वपत्रादिसाधनैः ।
नाराधितो मया देवः न नतश्च पुनः पुनः ॥ 166

विभूतिर्न धृता शुद्धा सर्वपापापनोदिनी ।
एवं सति तृषार्तेन जलं पेयं कथं मया ॥ 167

तृषया यदि गच्छन्ति गच्छन्त्वद्यासवो मम ।
तृषार्दितेन चेत्त्यक्ता तनुरेषा तदा मम ॥ 168

सर्वथा नरकावासो न भविष्यति मे ध्रुवम् ।
विभूतिधारणं मुक्त्वा मया चेत्पीयते जलम् ॥ 169

तदा तु नरकावासो भविष्यत्येव सर्वथा ।
विभूतिधारणं मुक्त्वा पीतं कैश्चित्पुरा जलम् ॥ 170

तैर्भुक्तमनुभुक्त्वैव स्थीयते नरकार्णवे ।
त्यक्त्वा शिवार्चनं कैश्चित्पुरा पीतं जलं ततः ॥ 171

ते त्वद्यापि नरके हन्त दुःखानि भुञ्जते ।। 172

अतः शिवार्चनं कृत्वा भस्मधारणपूर्वकम् ।
नत्वा साम्बं मया ग्राह्यं सलिलं शीतमण्वपि ।। 173

किमेतैर्मम कर्तव्यं प्राणैर्देहेन वाऽधुना ।
एवमत्यन्तयत्नेन शरीरं यदि पोष्यते ।। 174

तदा किमिदमस्माकं शरीरं शाश्वतं भवेत् ।
पूयशोणितदुर्गन्धमलालयमिदं सदा ।। 175

रोगागारं शरीरं मे किमनेन सुखं मम ।
अत्रास्थिबन्धं समलमपायशतसङ्कुलम् ।।
क्षयिष्णु रोगसम्बद्धं शरीरं मे न रोचते ।। 176

अनन्तानि शरीराणि त्यक्तान्येवं मया पुरा ।
इदमप्यधुना त्याज्यं तृषार्तेन मया ध्रुवम् ।। 177

अस्त्राणि कति नष्टानि कटिबद्धानि मे पुरा ।
तथा भवतु नष्टं मे वपुरेनदिहाधुना ।। 178

अतोऽद्य मनसा देवं शङ्करं पूजयाम्यहम् ।। 179

सर्वव्यापी सर्वभूतान्तरात्मा
साक्षी वेत्ता निर्गुणश्चेश्वरश्च ।

सोमो नित्यो निर्विकारश्चिदात्मा

नीलग्रीवः पातु मामाधिदुःखात् ॥ 180

मायातीतो मोहिताशेषलोकः

सोमाकारः सामवेदस्वरूपः ।

सर्वाशास्यः सर्वरूपो महेशो

नीलग्रीवः पातु मामाधिदुःखात् ॥ 181

व्यक्ताव्याक्तानादिधर्माभिगम्यो

व्यक्ताव्याक्तानादिधर्माभिगभ्यः ।

व्यक्ताव्यक्ताऽनादिवेदाभिगम्यो

नीलग्रीवः .... .... ॥ 182

यं वेदान्ता नैव जानन्ति देवं

यस्मान्नित्यं वेदवाचो निवृत्ताः ।

यं ब्रह्माद्या नैव जानन्ति सोऽयं

नीलग्रीवः .... .... ॥ 183

यत्सव्याङ्गादुद्भवः सृष्टिकर्तु-

र्यद्वामाङ्गाज्जन्म सम्प्राप विष्णुः ।

यः सर्वेशः सोऽयमाद्यन्तशून्यो

नीलग्रीवः .... .... ॥ 184

यं सर्वेशं तत्वतो वेदनिष्ठा
विज्ञायेशं पूजयन्त्यादरेण ।
सोऽयं शर्वः सर्ववेदान्तवेद्यो
नीलग्रीवः .... .... ॥ 185

यस्यापाङ्गस्पन्दमात्रेण नित्यं
ब्रह्मोपेन्द्रेन्द्रादयः कम्पमानाः ।
दूरे तिष्ठन्त्यन्वहं सोऽयमीशो
नीलग्रीवः .... .... ॥ 186

यत्पादाब्जं विष्णुरत्यन्तभक्त्या
स्वीयं नेत्रं सम्यगदुत्खाय रम्यम् ।
स्वाभीष्टार्थं पूजयामास सोऽयं
नीलग्रीवः पातु मामाधिदुःखात् ॥ 187

यस्य स्मृत्या सर्वपापौघनाशो
यत्पूजातो घोरसंसारनाशः ।
यस्य स्तुत्या मुक्तिराप्तैव सोऽयं
नीलग्रीवः पातु मामाधिदुःखात् ॥ 188

**शिव उवाच -**

एवं स्तुत्वा स भिल्लो मामानन्दाश्रुलसन्मुखः ।
दध्यौ देवाधिदेवं माममृताप्लुतविग्रहम् ॥ 189

तदानीमभवद्वृष्टिर्मन्दारकुसुमान्विता ।
शरीरं सिक्तमभवत्तद्वृष्ट्याऽस्य नगात्मजे ॥ 190

यदा वृष्टिरभूद्रम्या स पिधाय मुखं तदा ।
स्थितो मुखे जलस्यास्य प्रवेशो माऽस्त्विति प्रिये ॥ 191

किन्त्वस्य तृट् तदा शान्ता जलपानं विनापि च ।
जलं न पीतं भिल्लेन पात्यमानमपि ध्रुवम् ॥ 192

ततः स बिल्वपत्राणि पुष्पाण्यत्युत्तमानि च ।
मांसान्यपि विचित्राणि समादायैव निर्गतः ॥ 193

ततः शनैः शनैर्भिल्लः कालहस्तीश्वरालयम् ।
सम्प्राप पूजाद्रव्याणि गृहीत्वा मुदिताननः ॥ 194

ततः स्नात्वा प्रयत्नेन सुवर्णमुखरीजले ।
भस्मनोद्धूलनं कृत्वा त्रिपुण्ड्रं च चकार सः ॥ 195

ततो गृहीत्वा पुष्पाणि बिल्वपत्राणि चादरात् ।
मांसं च जगृहे भिल्लो जलं चास्येन भक्तितः ॥ 196

ततो मुखजलैः सम्यगभ्यषिञ्चत्समाहितः ।
बिल्वपत्रैः सपुष्पैश्च पूजयामास भक्तितः ॥ 197

ततो मांसानि सर्वाणि सुस्वादूनि प्रयत्नतः ।
मह्यं निवेदयामास मद्ध्यानैकपरायणः ॥ 198

प्रदक्षिणनमस्कारान् नर्तनं च चकार सः ।
एतस्मिन्नन्तरे देवि मुनयो ब्रह्मवादिनः ।। 199

सायं प्रदोषपूजार्थं सङ्घशः समुपागताः ।
तदा मया भिल्लभक्तिप्रख्यापनमनीषया ।। 200

दृढं देवालयस्यैव भ्रंशस्तेभ्यः प्रदर्शितः ।
भ्रंशमानं ततो दृष्ट्वा देवालयमनुत्तमम् ।। 201

ऋषयो निर्ययुः सर्वे विस्मितास्ते शिवालयम् ।
भ्रश्यमानं तु तं दृष्ट्वा भिल्लो देवालयं तदा ।। 202

विस्मितश्चिन्तयामास किङ्कर्तव्यमिति प्रिये ।
भ्रश्यमानस्तु पाषाणः शिवलिङ्गे पतिष्यति ।। 203

तत्पातेन त्विहाघातः शिवलिङ्गे भविष्यति ।
सजीवेनायमाघातो मया द्रष्टुं न शक्यते ।। 204

भ्रंशमानाश्च पाषाणा न धर्तव्या यतो दृढाः ।
शक्तिश्च मम नास्त्येव बृहत्पाषाणधारणे ।। 205

पतिष्यन्त्येव पाषाणाः शिवलिङ्गोपरि ध्रुवम् ।
तनुं वितानवत्कृत्वा शिवलिङ्गोपरि स्थिते ।। 206

भ्रश्यमानस्तु पाषाणो मत्पृष्ठे निपतिष्यति ।
यदि पाषाणभारेण मच्छरीरं पतिष्यति ।। 207

तदा तु शिवलिङ्गाग्रे शरीरं मे पतिष्यति ।
ततः परं तु पाषाणा बहवोऽपि पतन्तु ते ॥ 208

तथा तु शिवलिङ्गस्य त्वाघातो न भविष्यति ।
येन केनापि रूपेण शिवलिङ्गस्य सर्वथा ॥ 209

आघातो न यथाऽत्र स्यात्तथा कार्यं प्रयत्नतः ।
बहिः पलाय्य गमने रक्षितं मे वपुर्भवेत् ॥ 210

स्वदेहत्राणनाल्लोके पुरुषार्थो न सिध्यति ।
स्वदेहरक्षणं कर्तुं को नु यत्नं करिष्यति ॥ 211

सुखलेशोऽपि नास्त्यत्र बहिश्चेद्गम्यते मया ।
शिवलिङ्गाघातहेतुदर्शनात्क्व सुखं भवेत् ॥ 212

किञ्चात्र यदि भाग्येन शरीरं मे पतिष्यति ।
तदा मुक्तिरनायासाद्भविष्यति मम ध्रुवम् ॥ 213

यदि स्याच्छिवलिङ्गस्य सन्निधौ मरणं तदा ।
मुक्तिकान्ताकरग्राहः सद्य एव भविष्यति ॥ 214

मरणं दुर्लभं पुंसां शिवलिङ्गस्य सन्निधौ ।
तत्र चेन्मरणं पुंसा न पुनर्जननं ध्रुवम् ॥ 215

शीर्यमाणस्वभावस्य शरीरस्यास्य रक्षणम् ।
अस्मिन् काले कथं कार्यं परलोकार्थिना मया ॥ 216

यदि मृत्युः समायाति तदा देहस्य रक्षणम् ।
कर्तुं न शक्यते नूनमुपायैर्बहुभिर्मया ॥ 217

मृत्योरागमने कुत्र कर्तव्यं स्यात्पलायनम् ।
न त्यक्ष्यति जनं कालः पलाय्य गतमप्यहो ॥ 218

मृत्युञ्जयं विना को वा मृत्युभीतिहरः प्रभुः ।
मृत्युं जयति यो यस्मात्स मृत्युञ्जय ईरितः ॥ 219

मृत्युपाशानुगाः सर्वे प्राणिनः स्वल्पजीविताः ।
ततस्तद्दर्शनात्पुंसां मृत्युभीतिर्न जायते ॥ 220

अतो मृत्युञ्जयस्यैव पूजा कार्या नरैः सदा ।
भौतिकस्यास्य देहस्य रक्षणं दुर्लभं नृणाम् ॥ 221

पलाय्य यदि गच्छेयं लिङ्गं हित्वा महेश्वरम् ।
तदा भक्तिर्महादेवे मम का वा भविष्यति ॥ 222

स्थातव्यमिह यत्नेन मया शङ्करसन्निधौ ।
इत्युक्तः स दृढो भिल्लः पुनः सम्पूज्य सादरम् ॥ 223

स्वाङ्गं वितानवच्चक्रे शिवलिङ्गोपरि स्वयम् ।
तदा रवो महानासीत् पाषाणपतनोद्भवः ॥ 224

तथाप्यतिदृढो भिल्लो धैर्येणैवात्र संस्थितः ।
तथास्थितं निषादं तं दृष्ट्वा ते मुनिपुङ्गवाः ॥ 225

अतिविस्मयमापन्नास्तुष्टुवुर्मुनिपुङ्गवाः ।
धन्योऽसि कृतकृत्योऽसि कृतार्थोऽसि न संशयः ॥ 226

यतः सदाशिवे भक्तिरीदृशी त्वयि राजते ।
भाग्यस्य तव नान्तोऽस्ति सत्यं सत्यं न संशयः ॥ 227

यतः सदा शिवे भक्तिरीदृशी त्वयि राजते ।
भाग्यस्य तव नान्तोऽस्ति सत्यं सत्यं न संशयः ॥ 228

तव धन्यतरो देवः(?) सत्यं सत्यं न संशय ।
यतः सदाशिवे भक्तिः .... .... ॥ 229

तवैव जीवमं धन्यं सत्यं सत्यं न संशयः ।
यतः सदाशिवे भक्तिः .... .... ॥ 230

तवैव जन्म सफलं सत्यं सत्यं न संशयः ।
यतः सदाशिवे भक्तिः .... .... ॥ 231

तवैव जननी धन्या सत्यं सत्यं न संशयः ।
यतः सदाशिवे भक्तिः .... .... ॥ 232

तवैव जनको धन्यः सत्यं सत्यं न संशयः ।
यतः सदाशिवे भक्तिः .... .... ॥ 233

तवैव कुलमुत्कृष्टं सत्यं सत्यं न संशयः ।
यतः सदाशिवे भक्तिः .... .... ॥ 234

शक्तिस्त्वमानुषी सेयं धैर्यमेतदमानुषम् ।
भक्तिरेताहृशी लोके न दृष्टा न श्रुता ध्रुवम् ॥ 235

यस्यास्त्वेताहृशी भक्तिर्महादेवे सुरोत्तमे ।
तस्य हस्तगतैवास्ति मुक्तिकान्ता न संशयः ॥ 236

त्वयेदं मानुषं रूपं धृतमस्ति शिवप्रिय ।
भवान्कश्चन देवोऽस्ति देवमध्ये न संशयः ॥ 237

देवेष्वीदृशो भक्तः शङ्करस्य जनार्दनः ।
शिवार्चनपरो जातस्तत्ववेत्ता यतो हरिः ॥ 238

विदित्वा तत्वतो विप्र देवदेवं सदाशिवम् ।
पूजयामास बहुधा तपश्चरणपूर्वकम् ॥ 239

**विष्णुरुवाच -**

स्वनेत्रकमलं सम्यक्समुत्पाट्य प्रयत्नतः ।
चकार मुदितो भक्त्या शिवपादाम्बुजार्चनम् ॥ 240

अनेकल्पपर्यन्तं पुरा नारायणः स्वयम् ।
चक्रे शङ्करमुद्दिश्य तपश्चर्यां प्रयत्नतः ॥ 241

स एवं विष्णुः शैवेन्द्रो गृहीत्वा मानुषीं तनुम् ।
एवं शिवार्चनपरस्तिष्ठत्यत्र न संशयः ॥ 242

कथमेतादृशो धर्मो मानुषस्य भविष्यति ।
यद्भ्रश्यमानपाषाणेष्वप्यासीत्सुस्थिरं मनः ।। 243

एवं भिल्लं प्रशंसन्तः स्थिताः सर्वे मुनीश्वराः ।
भिल्लस्तु मन्मना भूत्वा मां ध्यायन्नेव संस्थितः ।। 244

ततो मुनिवरैर्दृष्टो यथास्थानं शिवालयः ।
ततो बभूव विमला पुष्पवृष्टिर्मनोहरा ।। 245

ततः स भिल्लः सन्तुष्टः पुनरभ्यर्च्य मां मुदा ।
विस्मितो निर्ययौ मन्दं मुहुर्मां स विलोकयन् ।। 246

भिल्लं विलोक्य मुनयस्तमेनं बहिरागतम् ।
प्रीत्या संपूजयायासुर्विनयानतकन्धरम् ।। 247

ततः सम्पूज्य मां भक्त्या विल्वपत्रादिसाधनैः ।
जग्मुः स्वस्वालयं सर्वे शंसन्तस्तस्य विक्रमम् ।। 248

एतादृशास्तु मद्भक्ता अगण्याः सन्ति भूतले ।
तस्मिन्नपि शिवक्षेत्रे मदर्चनपरायणाः । 249

**श्रीपार्वत्युवाच -**

कोऽयं पूर्वभवे शम्भो कुत्र वासीन्निषादजः ।
कथमेतादृशी भक्तिस्त्वयि तस्य वद प्रभो ।। 250

श्रीसदाशिव उवाच -

अयं पूर्वभवे देवि कुक्कुटो मांसभक्षकः ।
भिल्लेन केनचित्सोऽपि पोषितो हिमवद्गिरौ ॥ 251

स भिल्लः प्रत्यहं धन्वी वने हत्वा बहून्मृगान् ।
उत्तमं मांसमादाय-पचन्हि प्रीतिपूर्वकम् ॥ 252

ततो मन्दोष्णमादाय सुपक्वं मांसमुत्तमम् ।
मह्यं निवेद्य यत्नेन स्वयमश्नाति सादरम् ॥ 253

मह्यं निवेदितं मांसमन्यस्मै नो ददाति सः ।
स्वयमेवातियत्नेन स प्राश्नाद्भक्तिपूर्वकम् ॥ 254

भक्ष्यमाणस्य मांसस्य कश्चिल्लेशः कदाचन ।
पपात भूमौ तन्मांसं कुक्कुटेन हि भक्षितम् ॥ 255

ततः स भिल्लस्तं सद्यः सञ्जघानातिरोषतः ।
स चापि कुक्कुटः प्राप भिल्लजन्मैव सत्वरम् ॥ 256

प्राप्यापि भिल्लजन्मासौ दिष्ट्या जातिस्मरोऽभवत् ।
ततो बाल्यं समारभ्य शिवपूजापरोऽभवत् ॥ 257

कुक्कुटस्य स्थिता पूर्वं मां सभक्षणवासना ।
तया वासनया मांसं सम्पादयति सादरम् ॥ 258

तत्तु मह्यं निवेद्यैव भक्षयत्यन्वहं मुदा ।
सम्पूज्य सादरं भक्त्या लिङ्गरूपिणमव्ययम् ॥ 259

अतीतज्ञानवानेव जातो भिल्लो गिरीन्द्रजे ।
तस्य नानागतज्ञानं तस्य कारणमुच्यते ॥ 260

मद्यमन्नं प्रयत्नेन निवेद्याश्नाति यः सदा ।
स भूपालः सर्ववेत्ता भवत्येव हि सर्वथा ॥ 261

अतीतानागतज्ञानाद्भूपालत्वं च शाश्वतम् ।
जातिस्मरत्वं सौन्दर्यं मन्नैवेद्यस्य भक्षणात् ॥ 262

मन्नैवेद्यं अणु(यदु)च्छिष्ठमन्यानुच्छिष्ठमुत्तमम् ।
योऽश्नाति स सु सर्वज्ञः स भूपालोऽभिजायते ॥ 263

अन्योच्छिष्ठं कुक्कुटेन मन्नैवेद्यं तु भक्षितम् ।
तेनातीतज्ञानमासीन्मयि भक्तिश्च शाश्वती ॥ 264

यया भक्त्या मुनिश्रेष्ठा लज्जिताः साधुवृत्तयः ।
भक्तिस्तु तादृशी प्राप्ता मन्नैवेद्यस्य भक्षणात् ॥ 265

ततः परमय भिल्लः सर्वभूचक्रपालकः ।
बभूव सर्ववेत्ता च सर्वसौभाग्यसंयुतः ॥ 266

स्वरादिसर्वलोकेषु सञ्चचार नराधिपः ।
विष्णुब्रह्मादिभिर्नित्यं स्तूयमानः सुरर्षिभिः ॥ 267

राज्याधिपत्यं सम्प्राप्य सोऽहं प्रत्यहमादरात् ।
रत्नैर्लक्षामितैर्नित्यं चकार मम पूजनम् ॥ 268

अष्टलक्षमितैर्नित्यं स्वर्णपुष्पैश्चकार सः ।
पूजयामास भक्त्याऽर्य मामनाद्यन्तमव्ययम् ॥ 269

दीपान्लक्षावधि प्रीत्या कपिलाघृतपूरितान् ।
ददाति मह्यमनिशं तथा कर्पूरदीपकान् ॥ 270

एवं सत्यत्यन्त यत्नेन मदर्चनपरायणः ।
कृत्वा राज्यं ततः पुत्रे राज्यं सर्वं न्यवेदयत् ॥ 271

ततो दक्षिणकैलासे नित्यं कृत्वा मदर्चनम् ।
वहुकालमुवासायं ततस्तत्रतनुंजहौ ॥ 272

ततस्तस्मै मया दत्तो मोक्षऽपि वरवर्णिनि ।
स भुक्त्वा राज्यमनिशंमन्ते मुक्ति गमिष्यति ॥ 273

राज्यप्रदोऽहं रङ्कस्याप्यन्वहं पूजितोऽम्बिके ।
मुक्तिदश्च न सन्देहः सत्यं सत्यं मयोच्यते ॥ 274

शरण्योऽहं वेदवेद्यो भुक्तिमुक्तिप्रदायकः ।
यस्यानुग्रहमिच्छामि तस्य वित्तं ददाम्यहम् ॥ 275

अन्ते च मोक्षं यच्छामि प्रतिज्ञेयं मम प्रिये ।
भुक्तिमुक्तिप्रदं मत्वा मामेव गतकल्मषाः ॥ 276

भजन्ति सततं भक्त्या भवबन्धविमोचकम् ।
तत्र दक्षिणकैलासे पुरा कश्चिद्द्विजोत्तमः ॥ 277

बिल्वपत्रादिभिर्नित्यं पूजयन्मामतोषयत् ।
तस्य पत्नी बभूवैका सुभगा युवतिः प्रिया ॥ 278

तया सहायं बहुधा न चकारैव सङ्गमम् ।
अयं निरन्तरं सेवां करोति मम सद्मनि ॥ 279

दूरीचकार यत्नेन रजांसि शिवचिन्तकः ।
सुवर्णमुखरीतोयैरयमन्वहमादरात् ॥ 280

अभिषिच्य स्थितः पूर्वं रुद्राध्यायपुरःसरम् ।
कोमलैर्बिल्वपत्रैर्मां पूजयामास भक्तितः ॥ 281

पुष्पैरन्यैश्च सततं पद्मैर्नीलोत्पलैरपि ।
चकारानुक्षणं विप्रो भस्मरुद्राक्षधारणम् ॥ 282

भालं त्रिपुण्ड्ररेखाभिरलङ्कृत्य द्विजोत्तमः ।
स्मृत्वा स्मृत्वातिसन्तुष्टो नित्यं नृत्तं चकार सः ॥ 283

शिवेति नाम विमलं सञ्जपन्नेव स्थितः सदा ।
रुद्राक्षधारणे तस्य प्रीतिरत्यन्तमास्थिता ॥ 284

रुद्राक्षभस्मसञ्छन्नगात्रो मां पूजयत्ययम् ।
एतादृशं विलोक्यैनं पत्नी भोगपराङ्मुखम् ॥ 285

रात्रावाकारयामास भोगार्थं भोगलालसा ।
सा शय्यायां विवसना तद्धस्ते चन्दनं ददौ ॥ 286

ददौ माल्यानि च प्रीत्या सुगन्धीनि मनोहरा ।
तदा स शैवः पृथुलं दाडिमीफलसन्निभम् ।। 287

तस्याः कुचद्वयं पीनं ददर्श हृदयङ्गमम् ।
स च तस्मिन्कुचयुगे शिवलिङ्गमतिं दधौ ।। 288

ततोऽसौ लिङ्गबुध्यैव पस्पर्श कुचमण्डलम् ।
ततश्च लिङ्गबुध्यैव गन्धमाल्यादिभिर्द्विजः ।। 289

निर्विकारेण मनसा पूजां कर्तुं प्रचक्रमे ।
अथ प्रदक्षिणादीनि चकार प्रीतमानसः ।। 290

पूजां निर्वर्त्य विप्रोऽसौ सत्वरं बहिरागतः ।
शय्यागृहाद्बहिर्यान्तं दृष्ट्वा पत्नी सुदुःखिता ।। 291

उवाचेदं वचो देवि तच्छृणुष्व यथाक्रमम् ।
निर्विकारः पतिर्मेऽयं सर्वदा शिवचिन्तकः ।। 292

मनो निवृत्तमेतस्य विषयेभ्यस्तु सर्वथा ।
भाग्यवान्नात्र सन्देहो निष्कामहृदयो ह्ययम् ।। 293

वैराग्यमीदृशं लोके वहुपुण्यतपःफलम् ।
अहोऽयं त्यक्तवसनां सकामां शयनालये ।। 294

मां भार्यां सुभगां दृष्ट्वा विकारं नाप सर्वथा ।
शिवलिङ्गमयं सर्वं पश्यत्ययमुदारधीः ।। 295

अस्मिन्विकारलेशोऽपि न मया दृश्यते ध्रुवम् ।
विकाररहिते पुंसि स्त्रीणां प्रीतिर्न जायते ।। 296

ब्रह्मापि ऋश्यवपुषा रोहिद्भूतां स्वकन्यकाम् ।
विकाराक्रान्तहृदयः सद्यो रन्तुं प्रचक्रमे ।। 297

विश्वामित्रादिभिश्चापि कृतः स्त्रीसङ्ग्रहः पुरा ।
दुर्लभः पुरुषाणां तु नित्यमिन्द्रियनिग्रहः ।। 298

विषयेभ्यो हि सर्वेभ्यः स्त्रीरूपविषयो महान् ।
पुमांसं मोहयत्येव विरक्तमपि भामिनी ।। 299

विषयेभ्यः परावृत्तो निश्चलोऽयं महामनाः ।
भाग्यमेतस्य विप्रस्य तपश्चर्यापि भूयसी ।। 300

निवृत्तोऽयं न सन्देहः प्रवृत्तिर्नास्य दृश्यते ।
एवं निवृत्तचित्तस्तु पुरुषो दुर्लभो भुवि ।। 301

निवृत्तं यन्मनो भोगाज्जितं तेन जगत्त्रयम् ।
मयापि सुखभोगेच्छा त्यक्तव्या नास्ति संशयः ।। 302

इतः परमहं चापि विनिवर्त्य मनो मम ।
विषयेभ्यः सदा देवं पूजयिष्यमि शङ्करम् ॥ 303

शिवपूजोपकाराय शरीरं जायतां मम ।
किं वा पुष्टेन देहेन यौवनेनापि किं मम ॥ 304

यावदस्ति बलं तावन्महेशं पूजयाम्यहम् ।
नित्यं मृण्मयलिङ्गानां शतं सम्पूजयाम्यहम् ॥ 305

प्रदक्षिणनमस्कारान्करिष्येऽहं यथेच्छया ।
इदानीं पार्वतीनाथो यदि नाभ्यर्च्यते मया ॥ 306

वार्धके शिवपूजायां शक्तिर्मम कथं भवेत् ।
किञ्च तावदयं देहः स्थास्यतीति न निश्चयः ॥ 307

यौवने चञ्चलं चित्तमन्यत्रैव प्रयास्यति ।
चित्तं स्थिरीकरिष्यामि शङ्करस्यैव पूजया ॥ 308

महादेवोऽखिलाराध्यः कामारिर्भक्तवत्सलः ।
करिष्यति कृपासिन्धुः कृपां मयि न संशयः ॥ 309

प्रसन्ने देवदेवेशे शङ्करे लोकशङ्करे ।
संसारपाशनिर्मोको भविष्यत्येव नान्यथा ॥ 310

प्रसन्ने पार्वतीनाथे कीटो वा पुल्कसोऽपि वा ।
मुच्यते नात्र सन्देहो घोरसंसारसागरात् ॥ 311

सर्वदा विषयासक्तं चित्तं यदि भविष्यति ।
तदा कथं वा संसारसागरोत्तरणं भवेत् ॥ 312

मम भाग्यवशादेव भर्ता विषयनिःस्पृहः ।
अन्यथा घोरसंसारान्निवृत्तिः स्यात्कथं मम ॥ 313

गर्भधारणमुख्यानि स्त्रीणां दुःखानि कोटिशः ।
तानि दुःखानि सर्वाणि सह्यान्येव न सर्वथा ॥ 314

प्रसूतिवेदना या सा दुःसहा बहुधा ततः ।
जीवनस्यापि सन्देहो भवत्येव हि वस्तुतः ॥ 315

तद्दुःखसहने प्राप्यं विशिष्टं फलमेव किम् ।
तद्दुःखसहनं भूयोदुःखायैव भविष्यति ॥ 316

महेशस्य प्रसादोऽस्ति मयि सर्वात्मना यतः ।
विरक्तोऽयमभूद्भर्ता तपस्यापरमानसः ॥ 317

भवदुःखविनाशार्थं करिष्ये यत्नमादरात् ।
दुःखनाशोऽपि नान्यस्माद्विना शङ्करपूजनात् ॥ 318

अतोऽहं श्रीमहादेवं पूजयामि यथाविधि ।
नानाविधानि दुःखानि पापकर्मफलानि हि ॥ 319

तानि पापानि नश्यन्ति महेशस्यैव पूजया ।
इत्युक्त्वा विषयेभ्यः सा निवृत्ता नियतेन्द्रिया ॥ 320

गृहं दत्वा शाम्भवाय परावृत्ता ततो गृहात् ।
ततोऽसौ नियमेनैव सुवर्णमुखरीजले ॥ 221

स्नात्वा चकार स्वे देहे भस्मनोद्धूलनं मुदा ।
कृत्वा त्रिपुण्ड्रमनघा ललाटादौ ततः परम् ॥ 322

सुवर्णाभरणं त्यक्त्वा चक्रे रुद्राक्षधारणम् ।
कण्ठकर्णादिषु तथा भक्तिश्रद्धापुरःसरम् ॥ 323

ततस्तीर्थजलं शुद्धं बिल्वपत्राणि चादरात् ।
गृहीत्वा सावधानेन मम पूजां चकार सा ॥ 324

ततः प्रदक्षिणादीनि कृत्वा मौनेन भक्तितः ।
निमीलिताक्षी मद्गेहे संविष्टा मयि तत्परा ॥ 325

ततो ददर्श विप्रेन्द्रं कृपालुं शिवतत्परम् ।
तं प्रणम्य बभाषे सा कृताञ्जलिपुटा शिवे ॥ 326

सुभगा उवाच -

शैवोत्तम कृपालुस्त्वं शिवपूजापरायणः ।
शिवपूजा कथं कार्या वद तन्मह्यमादरात् ॥ 327

इति तद्वचनं श्रुत्वा स शैवो मत्परायणः ।
तामुवाच प्रहृष्टात्मा भूतिरुद्राक्षभूषणाम् ॥ 328

धन्यासि कृतकृत्यासि यतस्त्वं शिवतत्परा ।
शिवपूजाविधिं वक्ष्ये श्रूयतां मोक्षदायकम् ॥ 329

शौचादिकं निवर्त्याशु स्नात्वोद्धूल्यैव भस्मना ।
त्रिपुण्ड्रधारणं कार्यं ततो रुद्राक्षधारणम् ॥ 330

ततः परं बाणलिङ्गं मृण्मयं लिङ्गमेव वा ।
पूजनीयं प्रयत्नेन विल्वपत्रादिभिर्मुदा ॥ 331

पञ्चाक्षरेण कर्तव्यं स्त्रीभिः शङ्करपूजनम् ।
षडक्षरेण कर्तव्यं पुरुषैः शिवपूजनम् ॥ 332

स्पर्शः पार्थिवलिङ्गस्य बाणलिङ्गस्य चादरात् ।
स्त्रीभिः कार्यः स्थावरस्य लिङ्गस्य तु न सर्वथा ॥ 333

विहितश्चरलिङ्गेषु स्पर्शः स्त्रीणां प्रयत्नतः ।
न स्थावरेषु लिङ्गेषु सत्यमेतन्मयोच्यते ॥ 334

स्थावरेष्वपि लिङ्गेषु यत्र दिव्यं भविष्यति ।
तत्र पर्वणि कर्तव्यं स्पर्शनं स्त्रीभिरादरात् ॥ 335

स्त्रीभिः स्पर्शोऽपि कर्तव्यः पञ्चाक्षरपुरःसरम् ।
पूजाप्यन्या यथायोगं पञ्चाक्षरपुरःसरम् । 336

पञ्चाक्षरः परो मन्त्रः सर्वमन्त्रशिरोमणिः ।
स्त्रीभिरप्यन्वह जप्यः सहस्रं विधिपूर्वकम् ॥ 337

पञ्चाक्षरप्रभावस्तु मया वक्तुं न पार्यते ।
किन्तु वेद महादेवस्तत्प्रभावं यथार्थतः ॥ 338

जप्ते पञ्चाक्षरे मन्त्रे नश्यत्यघकुलं क्षणात् ।
पञ्चाक्षरो महामन्त्रो योऽयं सोऽसौ शिवात्मकः ॥ 339

इत्युक्ता सुभागा साध्वी तं प्रणम्य पुनर्द्विजम् ।
मह्यं पञ्चाक्षरं देहीत्याबभाषे कृताञ्जलिः ॥ 340

स शैवेन्द्रः कृपासिन्धुस्तस्यै तं विधिवन्मुदा ।
ददौ पञ्चाक्षरं शुद्धं सर्वपापौघनाशनम् ॥ 341

ततस्तदाज्ञया साध्वी तं प्रणम्य यथाविधि ।
नित्यं पार्थिवलिङ्गानि पूजयामास सादरम् ॥ 342

एतादृशीं सुशीलां तां दृष्ट्वा सर्वे मुनीश्वराः ।
धन्येयं पूजनार्हेति प्रशशंसुर्मुदान्विताः ॥ 343

एवं शिवध्यानपूजापरां तां द्रष्टुमेकदा ।
मया पुरुषरूपेण गतं लीलाविहारिणा ॥ 344

सा चाप्रतिमसौन्दर्यं मयि दृष्ट्वाप्यनन्यधीः ।
निमीलिताक्षियुगला शिवध्यानपराऽभवत् ॥ 345

तदैवोक्तमिदं वाक्यं मया सादरमम्बिके ।
तेनापि तन्मनोवृत्तिरन्यथा न बभूव हि ॥ 346

चलं हि यौवनं बाले सफलं क्रियतां द्रुतम् ।
ईदृशं यौवनं क्वापि न दृष्टं सर्वथा मया ॥ 347

तवैव मुखचन्द्रोऽयं परिपूर्णकलः सदा ।
स तु क्षीणकलश्चन्द्रः कदाचित्पूर्णतां व्रजेत् ॥ 348

तवेदमक्षियुगलं विकचामलपङ्कजम् ।
भालपट्टनिभं वस्तु न कुत्राप्यस्ति वस्तुतः ॥ 349

भ्रमद्भ्रमरसङ्घोऽपि धिक्कृतः केशपाशतः ।
नासेयं तिलपुष्पाणि धिक्करोति वरानने ॥ 350

कुचयुग्ममिदं भद्रं पृथुलं मममोहकम् ।
त्रिवल्युपरि नीलेयं रोमराजिर्विराजते ॥ 351

अयं जघनदेशोऽपि बाले सर्वसुखप्रदः ।
त्वद्रूपसदृशं रूपं नानुभूतं मया ध्रुवम् ॥ 352

रम्भोर्वशी तथान्या वा न ते तुल्या भविष्यति ।
किमिदं क्रियते बाले यौवनानुचितं त्वया ॥ 353

वृणु मां सुन्दरं पूर्णयौवनं सुन्दरि द्रुतम् ।
धनधान्यादिसम्पत्तिर्भूयसी मम विद्यते ॥ 354

साधनानि च भोगार्हाण्यसङ्ख्यानि ममालये ।
ईदृशं यौवनं प्राप्य भोगेच्छा क्रियते यदि ॥ 355

तदैव यौवनं धन्यं सफलं च भविष्यति ।
इत्युक्तं मद्वचः श्रुत्वा सा च प्रत्यब्रवीदिदम् ॥ 356

**सुभगोवाच -**

मैवं वद द्विजश्रेष्ठ संसारे मा रतिं कुरु ।
संसारोन्मूलनायैव कुरु यत्नमहर्निशम् ॥ 357

स्मर स्मरहरं नित्यं स्मरं मा स्मर मा स्मर ।
अधीतवेदशास्त्राणां कथमेतादृशी मतिः ॥ 358

अज्ञानेन कथं ज्ञानमावृतं स्फुरदुज्ज्वलम् ।
दुर्लभं प्राप्य जन्मेदं ब्राह्मण्यमतिसत्तमन ॥ 359

कथं नाराध्यते नित्यं देवदेवो महेश्वरः ।
नित्यमस्मिन्नपि क्षेत्रे स्थित्वा स्मरहरो हरः ॥ 360

नाराध्यते कथं भक्त्या विहाय विषये रतिम् ।
भज नित्यं प्रयत्नेन साम्बं संसारमोचकम् ॥ 361

अनर्थहेतौ संसारे मा कुरुष्व रतिं द्विज ।
स्मर निःसारतामस्य संसारस्य निराकुलः ॥ 362

स्मरहारी पुरारिर्यस्तमाराधय भक्तितः ।
संसारघोरकूपेषु पतित्वापि मुहुर्मुहुः ॥ 363

पुनः संसारकूपेषु पतनेच्छा कथं तव ।
अत्यन्तदुर्लभं क्षेत्रमिदं ब्रह्मादिसेवितम् ॥ 364

तत्र स्थित्वापि सततं कथं नाराध्यते शिवः ।
नित्यं श्रीकालहस्तीशं सुवर्णमुखरीजलैः ॥ 365

अभिषिच्य प्रयत्नेन बिल्वपत्रैः समर्चय ।
प्रदक्षिणनमस्कारैः प्रीणयस्व सदाशिवम् ॥ 366

जप पञ्चाक्षरं नित्यं संसारोन्मूलकारणम् ।
शरीरं सबलं तिष्ठत्यधुना यौवने तव ॥ 367

सहस्रं कुरु साष्टाङ्गप्रणामाञ्छम्भवे मुदा ।
शक्तिर्यावच्छरीरेऽस्ति तावच्छङ्करमर्चय ॥ 368

निर्बलेन शरीरेण शङ्करार्चा कथं भवेत् ।
शङ्करस्तु कृपासिन्धुस्तव मुक्तिं प्रदास्यति ॥ 369

निःसारतरसंसारतरुनाशो भविष्यति ।
पुरुषार्थोऽयमेवैकः पुरुषाणां द्विजन्मनाम् ॥ 370

सर्वं कुरु महादेवपदपङ्केरुहार्पणम् ।
पूजितः संस्मृतो वापि यो ददाति परं पदम् ॥ 371

तमेव देवदेवेशं महेशं शरणं व्रज ।
यथेदानीं मयि प्रीतिः तथा प्रीतिं शिवे कुरु ॥ 372

मयि या क्रियते प्रीतिस्तयाल्पं सुखमेव ते ।
सुखं सञ्जातमत्यल्पमन्ते नरकसाधनम् ॥ 373

प्रीतिश्चेत्क्रियते नित्यं शङ्करे भक्तशङ्करे ।
तदा तु प्राप्यते विप्र सुखमक्षय्यमन्वहम् ॥ 374

जना निक्षेपलाभार्थं यत्नं कुर्वन्ति सादरम् ।
ते तु स्फुटितकाचार्थं यत्नं कुर्वन्ति किं वद ॥ 375

शङ्करः सुखनिक्षेपान्स्वभक्तेभ्यः प्रयच्छति ।
सुखनिक्षेपलाभाय पूजय त्वं महेश्वरम् ॥ 376

यं प्राप्य न निवर्तन्ते योगिनो यतचेतसः ।
तमेव देवदेवेशं भज देवमुमापतिम् । 377

आनन्दनिलयं साम्बं लिङ्गात्मानं भज प्रभुम् ।
तस्यैव भजनेन त्वं दुर्लभं सुखमाप्स्यसि ॥ 378

प्रत्यगात्मा सर्वसाक्षी लिङ्गरूपेण तिष्ठति ।
तमर्चय प्रयत्नेन भुक्तिमुक्तिप्रदायकम् ॥ 379

उमासहायमानन्दसागरं योऽर्चयेन्मुदा ।
स करिष्यति परानन्दामृताम्भोनिधिमज्जनम् ॥ 380

सर्वान्तरगतं सर्वसाक्षिणं सर्वकर्मणाम् ।
नाराधयसि विप्रेन्द्र कुतो वा सावधानतः ॥ 381

न पश्यन्ति महादेवं सर्वसाक्षिणमीश्वरम् ।
अत एव न कुर्वन्ति मूर्खाः शङ्करपूजनम् ॥ 382

अनायासेन सम्प्राप्या मुक्तिर्यत्पूजया द्विज ।
तमर्च्चय प्रयत्नेन बिल्वपत्रैर्वनस्थितैः ।। 383

सुवर्णमुखरीतोयैर्बिल्वपत्रैश्च शङ्करम् ।
यं भजन्ति मुनीन्द्राश्च तं भजस्व महेश्वरम् ।। 384

नीलोत्पलानि सन्त्यत्र तैरर्चय सदाशिवम् ।
तैरर्चितो महादेवो भुक्तिं मुक्तिं च यच्छति ।। 385

पूजयित्वा महादेवं जप पञ्चाक्षरं मनुम् ।
तेनैव मोहविच्छित्तिर्भविष्यति तव ध्रुवम् ।। 386

शतश्रुतिस्मृतं पुण्यं शतरुद्रं द्विजोत्तम ।
रुद्राध्यायजपेनेशः प्रीयते भगवाञ्छिवः ।। 387

मुक्तिदं तत्त्रयं प्राहुर्मुनयः शिवतत्पराः ।
लिङ्गार्चनं रुद्रजपः पञ्चाक्षरजपस्तथा ।। 388

तापत्रयोपशमनमेतत्त्रयमतो द्विज ।
कुरु यत्नेन सततं संसारे मा रतिं कुरु ।। 389

याहि याहि यथाकामं यत्र कुत्रापि सत्वरम् ।
एकान्तवासिनीं नारीं दृष्ट्वा सर्वेऽपि सज्जनाः ।। 390

दूरतो यान्ति विप्रेन्द्र त्वया किं क्रियते वद ।
विषयेभ्यो निवृत्तां मां बलाद्यदि वरिष्यसि ।। 391

तुभ्यं शापो मया देयो नान्यः पन्था ममास्ति वै ।
एवं वदन्ती सा देवी दृष्ट्वा सम्पूजितं शिवम् ।। 392

निवारयैनमीशेति पूजां चक्रे पुनः पुनः ।
ततः परमहं देवि तस्मिँल्लिङ्गे मदात्मके ।। 393

आविरासं महेशानि विष्णुब्रह्मादिवन्दितः ।
ततस्तुष्टाव बहुधा सा मां भक्तिपुरःसरम् ।। 394

वरं ययाचे सा शम्भो त्वयि भक्तिर्दृढास्त्विति ।
पुनः सम्पूज्य मां सम्यग्ययाचे च वरान्तरम् ।। 395

त्वय्येवाहर्निशं चेतः स्थिरमस्त्विति सादरम् ।
अथ सा नम्रवदना पश्यन्ती मत्पदाम्बुजम् ।। 396

पुनरभ्यर्चयामास बिल्वपत्रादिभिर्मुदा ।
ततस्तस्यै करो दत्तोऽभीप्सितः प्रीतिपूर्वकम् ।। 397

अथ सा सुभगा साध्वी मद्ध्यानैकपरायणा ।
चिराय विजहौ प्राणान्महादेवेति वादिनी ।। 398

अव्याजभक्तिनिष्ठा सा मत्पूजजैकपरा यतः ।
अतो मुक्तिं गता साध्वी सोमपूजाविधेः फलम् ॥ 399

नरो भवतु वा नारी मामभ्यर्च्य सदाशिवम् ।
धर्ममर्थं च कामं च प्राप्य मुक्तिं च विन्दति ॥ 400

श्रीमद्दक्षिणकैलासे विलासः क्रियते मया ।
भक्तास्तत्रानुगृह्यन्ते शिवैकशरणाः शिवे ॥ 401

श्रीकालहस्तीश पिनाकपाणे
कन्दर्पदर्पापह कालकाल
नारायणाराधितपादपद्मे-
त्यहर्निशं तत्र वदन्ति शैवाः ॥ 402

॥ इति श्रीशिवरहस्ये सप्तमांशे शिवगौरीसंवादे
दक्षिणकैलासवर्णनं नामै-
कोनविंशोऽध्यायः ॥



# AN APPEAL

Manuscripts on Palm Leaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. you can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur

The manuscripts so presented will be accepted and acknowledged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars forstudy and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of theLibrary's gratitude for your gift.

The great Scholar-King of Tanjore, Rajah Serfoji, has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this World-famous 'Sarasvati Mahal Library'. It is open to you to share the honour of Serfoji, in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up? The Library waits for your answer.

DIRECTOR,
Sarasvati Mahal Library, Thanjavur.